हरे पाहि प्रकाशनम्–सप्तमं पुष्पम्

श्री ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण
व्यासयतिना विरचितायां श्रीमद्भाष्यटीकाविवृतौ

# तात्पर्यचन्द्रिका

प्रथमाध्यायस्य प्रथमः पादः
(प्रथमसम्पुटम्)

# TATPARYA CHANDRIKA

BY SRI VYASATEERTHA
(DISCIPLE OF SRI BRAHMANYA TEERTHA)

**(I Chapter I Part)**

I VOLUME

**Publisher :**
**Harathi Raghavendra Rao, B. A., Rtd. Tahsildar**
**Hare Pahi Prakashan**
**No. 144, 11th Cross, Jayanagar, Mysore-14.**

हरे पाहि प्रकाशनम्–सप्तमं पुष्पम्

श्री ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण
व्यासयतिना विरचितायां श्रीमद्भाष्यटीकाविवृतौ

# तात्पर्यचन्द्रिका

प्रथमाध्यायस्य प्रथमः पादः
(प्रथमसम्पुटम्)

# TATPARYA CHANDRIKA

BY SRI VYASATEERTHA
(DISCIPLE OF SRI BRAHMANYA TEERTHA)

(**I Chapter I Part**)

I VOLUME

**Publisher :**
**Harathi Raghavendra Rao, B. A., Rtd. Tahsildar**
**Hare Pahi Prakashan**
**No 144, 11th Cross, Jayanagar, Mysore-14.**

# PREFACE

श्रीमध्वः कल्पवृक्षश्च जयाचार्याश्च धेनवः ।
चिन्तामणिस्तु व्यासार्यः मुनित्रयमुदाहृतम् ॥

(श्रीमुष्णमाहात्म्यम् )

The publication of the first of the three volumes of the Tatparya Chandrika - The Magnum Opus of Sri Vyasaraja-the Saint Emperor-author of the famous Vyasathraya, the three invulnerable buttresses of Madhva Philosophy-is necessitated for the reason that the text is not available for the past sixty seven years. Even the available old copies of the text with the Commentry is purchased at exhorbitant rates by foreign scholars, who-of late-are showing keen interest in the study of Madhva Philosophy more than the professed Madhvas. Sri Vyasaraja ( 1478-1539 ) is the only sanyasin among the Madhva Saints to be showered encomiums by his Guru, the great Sri Sripadaraja for his erudite exposition of the essence and cream of the Madhva Bhashya and the Tatva Prakashika (2 Adhyayas only) of Sri Jayatheertha, in a superb manner which could be understood only with the explanation of Sri Raghavendra Swamiji's Chandrika Prakasha. For ordinary readers, it is unfathomable. Even pandits fumble to understand the text without the commentary. That is the superiority of the text.

To quote Sri Surendranath Das Gupta, in his preface to " A History of Indian Philosophy ", " the readers ... .. ... who will be introduced to the philosophy of Jayatheertha and particularly of Sri Vyasatheertha, will realise the strength and uncompromising impressiveness of the dualistic position. The logical skill and depth of acute dialectical thinking shown by Sri Vyasa Tirtha stands almost unrivalled in the whole of Indian thought ".

Sri Vyasaraja was forced by circumstances to ascend the throne of the Vijayanagar Empire much against his will for just one and half a hours when the Emperor, Sri Krishnadevaraya, surrendered his everything in utter humility to the Saint on the impending

attack of the deathkiller – Kuhu Yoga, which was pouncing on him. The Saint had no other alternative except to favour the ruler for,

' ईशेच्छया प्राप्तमिदं न हेयं इति स्म संचिन्त्य गुहामुखाचयौ ' ।

The Saint warded off the danger and gave away everything as dana to the scholars and the needy and established himself a permanent niche in the history of the Vijayanagar Empire Further, he was in a hurry to step down by restoring the throne to its ruler, as he was more interested in the pursuit of true knowledge, for which he was destined and ordained by the Lord as dictated by Sri Madhva in the Yati Pranava Kalpa —

' विष्णोस्सर्वोत्तमत्वं च सर्वदा प्रतिपादय '

He toured the whole of India tablishing Dwaita Schools of thought, defeating his opponents on the way

I am grateful to —

a) Vidvanmani Annacharya K Galagali, Vidwan Hayavadan Puranik and Sri M, M Ramachandrachar, who volunteered to spare the texts for preparation of the press copy,

b) Dr. B. N K. Sharma, the international scholar on Dwaita Philosophy for his valuable suggestions in editing the book and also to Panditaratnam K. S. Varadacharya for helping me a great lot in editing,

c) Prof K T. Pandurangi, who guided me to print the text in book form,

d) Sri M. Ramanarasiah artist for sparing the photo of Sri Vyasaraja,

e) and to M/S Jayanti Printers, who printed this book early.

मत्प्रेरकेण हरिणा या पूजा स्वस्य कारिता ।
वाग्यज्ञरूपा लक्ष्मीशस्तया प्रीणातु केशवः ॥

*Harati Raghavendra Rao*,
Publisher
Hare Pahi Prakashan
144, 11th cross, Jayanagar,
Mysore – 14

Roudri Pushya Bahula Saptami
(27-1-1981)
'ARADHANA'
of Sri Narahari Teertha

*Dedicated*

*to the memory of my*

**Revered Parents**

*who put me on the* **Right Royal Road**

*for the study of* **Madhva Philosophy**

## विषयानुक्रमणिका





## ॥ अथ यंत्रोद्धारहनुमत्स्तोत्रम् ॥

नमामि दूत रामस्य सुखद च सुरद्रुमम् ।
पीनवृत्तमहाबाहु सर्वशत्रुनिवारणम् ॥ १ ॥
नानारत्नसमायुक्त कुडलादिविराजितम् ।
सर्वदाभीष्टदातार सता वै दृढमाहवे ॥ २ ॥
वासिन चक्रतीर्थस्य दक्षिणस्य गिरौ सदा ।
तुगाबोधितरगस्य वातेन परिशोभिते ॥ ३ ॥
नानादेशागतै सद्भि सेव्यमान नृपोत्तमै. ।
धूपदीपादिनैवेद्यै पञ्चखाद्यैश्च सेवित. ॥ ४ ॥
भजामि श्रीहनूमन्त हेमकातिसमप्रभम् ।
व्यासतीर्थयतीन्द्रेण पूजित च विधानत ॥ ५ ॥
त्रिवार य पठेन्नित्य स्तोत्र भक्त्या द्विजोत्तम ।
वाछित लभतेऽभीष्ट षण्मासाभ्यन्तरे खलु ॥ ६ ॥
पुत्रार्थी लभते पुत्र यशोर्थी लभते यश ।
विद्यार्थी लभते विद्या धनार्थी धनमाप्नुयात् ॥ ७ ॥
सर्वथा मास्तु सन्देहो हरि. साक्षी जगत्पतिः ।
य करोत्यत्र सन्देह स याति नरक ध्रुवम् ॥ ८ ॥

इति श्री व्यासराजविरचितं यन्त्रोद्धारहनुमत्स्तोत्रम् संपूर्णम्

## ॥ श्री ग्रन्थमालिका स्तोत्रम् ॥

कृष्ण विद्यापति नत्वा पूर्णबोधार्यसद्गुरून् ।
जयतीर्थमुनीन्नत्वा वक्ष्येऽह ग्रथमालिकाम् ॥ १ ॥
नारायणेन व्यासेन प्रेरितस्तत्त्वसविदे ।
ग्रन्थानन्धद्वत्त्वकारासौ सप्तत्रिशदमन्दधीः ॥ २ ॥

गीताभाष्यं विधायासौ प्रथमं तुष्टिद हरे ।
भाष्याणुभाष्य चक्रेऽथ ह्यनुव्याख्यानमुत्तमम् ॥ ३ ॥
प्रमाणलक्षण नाम कथालक्षणसञ्ज्ञिकम् ।
उपाधिखण्डन चक्रे मायावादस्य खण्डनम् ॥ ४ ॥
चक्रे प्रपञ्चमिथ्यात्वमानखण्डनमेव च ।
चकार तत्वसङ्ख्यान साधान विष्णुदर्शनम् ॥ ५ ॥
ग्रन्थ तत्वविवेकाख्य तत्वोद्योत हरे प्रियम् ।
कर्मनिर्णयनामान ग्रन्थ न्यायार्थबृंहितम् ॥ ६ ॥
सुखतीर्थयतिश्चक्रे विष्णुतत्वविनिर्णयम् ।
ऋग्भाष्य च चकारासौ सर्ववेदार्थनिर्णयम् ॥ ७ ॥
ऐतरेय तैत्तिरीय बृहदारण्यमेव च ।
ईशावास्यं काठक च छांदोग्याथर्वण तथा ॥ ८ ॥
माण्डूक नाम षट् प्रश्न तथा तलवकारकम् ।
चक्रे भाष्याणि दिव्यानि दशोपनिषदां गुरु ॥ ९ ॥
निर्णय सर्वशास्त्राणा गीतातात्पर्यनिर्णयम् ।
सन्यायविवृति नाम न्यायशास्त्रानिकृन्तनम् ॥ १० ॥
नरसिहनखस्तोत्रं चक्रे यमकभारतम् ।
द्वादशस्तोत्रमकरोत्कृष्णामृतमहार्णवम् ॥ ११ ॥
तन्त्रसार चकारासौ सदाचारस्मृति सुधी ।
श्रीमद्भागवतस्यापि तात्पर्य ज्ञानसाधनम् ॥ १२ ॥
महाभारततात्पर्यनिर्णय सशयच्छिदम् ।
यतिप्रणवकल्पञ्च प्रणवार्थप्रकाशकम् ॥ १३ ॥
जयन्तीनिर्णयं चक्रे देवकीगर्भजन्मन. ।
कृष्णस्य कृष्णभक्तोऽयं द्वैपायनकराब्जभू ॥ १४ ॥
एतेषा पाठमात्रेण मध्वेशप्रीयतामिति ॥

इति श्री व्यासराजकृतग्रन्थमालिकास्तोत्रम् सपूर्णम्

Sri Vyasaraja warding off the Kuhuyoga of Sri Krishna Devaraya



राजाधिराज सपूज्य सर्व वैष्णवशेखर । गजगह्वर कर्नाट सिंहासन गतप्रभो ॥

॥ श्रीः ॥

श्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्य-

# श्रीमद्व्यासतीर्थमुनिविरचिता तात्पर्यचन्द्रिका

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## [ जिज्ञासाधिकरणम् ]

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

अस्पृष्टदोषगन्धाय कल्याणगुणसिन्धवे ।
नमो नमो भक्तमुक्तिदायिने शेषशायिने ॥ १ ॥

शमयन्भवसन्तापं रमयन्साधुचातकान् ।
कृष्णमेघः कृपादृष्टिवृष्ट्या पुष्णातु मामपि ॥ २ ॥

श्रीमदानन्दतीर्थार्यपादपङ्कजरेणवः ।
पवित्रयन्तु मां नित्यं पापपाटनपण्डिताः ॥ ३ ॥

शारदावासवदनशारदाम्बुरुहान्मुहुः ।
पद्मनाभमुनीन् वन्दे सर्वशास्त्रविशारदान् ॥ ४ ॥

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो(मे) हृदम्बरे ॥ ५ ॥

कमलावसिपदाम्भोजससक्तो हंसपुङ्गवः ।
ब्रह्मण्यगुरुराजाख्यो वर्ततां मम मानसे ॥ ६ ॥

पदवाक्यप्रमाणाब्धिविक्रीडनविशारदान् ।
लक्ष्मीनारायणमुनीन् वन्दे विद्यागुरून्मम ॥ ७ ॥

श्रीमद्भाष्यस्य टीका या जयतीर्थार्यनिर्मिता ।
गम्भीरा निर्मला चेमां व्याकरिष्ये यथामति ॥ ८ ॥

सूत्रे भाष्येऽनुभाष्ये च सन्न्यायविवृतौ तथा ।
टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते ॥ ९ ॥
प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोस्सम्यग्विदाकुर्वन्तु सूरयः ॥ १० ॥

ग्रन्थादौ मङ्गलमाचरति — **शुद्धेति** ॥ इदं च पद्य भाष्यस्थाद्यश्लोक विवरणरूपत्वात्तद्वदेव वक्ष्यमाणादिसूचकत्वेन व्याख्येयम् । आनन्दादेः शुद्धत्वं(नाम)सान्तत्वसातिशयत्वादिराहित्यम् । लेपः पुण्यपापसंबन्धः । श्रुतिमती श्रवणमनने । नियतध्यानं स्वयोग्योपासनम् । ज्ञानं साक्षात्कारः । स एव योग उपायः । अमलं मुमुक्षूपास्यम् । न तु परमत इव मुकुन्दाभिध मन्दोपास्यम् । व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यं सूचयन् मङ्गलान्तरमाचरति—**याच्ञेति** । अत्र यत उदैद्रिरिन्दिरेत्यादिना वक्त्रानुकूल्य निर्जरैरित्यादिना श्रोत्रानुकूल्यं याच्ञेत्यादिना प्रसङ्गानुकूल्यं च दर्शयता 'वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलते' त्यनुव्याख्यानोक्ता आप्तिमूलता सूत्राणां सूचिता । ब्रह्मसूत्रपदेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वात् श्रुतिमूलत्वं न्यायव्युत्पादकत्वाद्युक्तिमूलत्वञ्च सूचितम् । भाष्यस्य व्याख्येयत्वप्रयोजकं सफलत्वगम्भीरत्वादि दर्शयन् भाष्यकृतं प्रणमति — **स्वान्तेति** ॥ वैकर्तनांशुव्रजादेः स्वान्तध्वान्तनिकृन्तनादावशक्तत्वादेव भाष्येण जितत्वम् । गङ्गासङ्गेन यथा रथ्याद्भिर्नैर्मल्यं लभ्यते तथा मदीयाया वाचो विशुद्धिसिद्ध्यर्थं गुरोर्गिरो मदीयया वाचा सगम्यन्ते व्याख्यान व्याख्येयभावेन संबध्यन्त इत्यर्थः । यद्वा गुरोर्गिरः परस्परं सङ्गम्यन्ते संबद्धतया प्रकाश्यन्त इत्यर्थः । **अथाविद्येति** ॥ प्रतिग्रन्थव्याख्याप्रारम्भार्थोऽथशब्दः । **फलसाधनतासिद्ध्यर्थमिति** । समङ्गलस्यैव सफलत्वादिति भावः ॥ **भगवतः प्रसत्या पुरुषार्थो भवतीति सूचित इति** ॥ भगवत्प्रसादस्य मोक्षहेतुत्वे अतश्शब्देन संक्षिप्योक्त इत्यर्थः ॥ **विशिष्टगुणानप्याचष्ट इति** ॥ नारायणशब्दस्य विशिष्टगुणवाचकत्वप्रदर्शनं च तस्य ब्रह्मशब्दसमानार्थकत्वात् । शास्त्रार्थवाचकत्वाच्च नारायण एव शास्त्रार्थ इति दर्शयितुम् । **न रीयत इति** ॥ नञुपपदात् रीङ्क्षय इत्यस्माद्धातोः करणे

डप्रत्यये प्रज्ञादित्वात्स्वार्थेऽण्प्रत्यये च कृते नारमिति रूपसिद्धिरिति द्रष्टव्यम् । अरमण दुःखम् ।। **निर्दोषवेदोत्पन्नत्वादिति** ।। निर्दोषवेदवाचकान्नारशब्दा-त्तस्येदमित्यणि कृते नारशब्दो वेदजन्यज्ञानवाचीति भावः । **नगनाकादि (शब्द)वदिति** ।। ननु नभ्राण्नपादित्यादिसूत्राभ्यां नाकनगशब्दयोः नलोपाभाव उक्तः नारायणशब्दे तु नेति कथं तद्दृष्टान्तीकरणमितिचेन्मैवम । स्त्रैणार्थ इत्यत्र 'स्त्रीपुंसाभ्यां' मित्यादिना विहितस्य नञो नलोपाभावार्थ 'न लोपो नञः' इति सूत्रे 'रात्रेः कृतिविभाषे'त्यतोऽनुवृत्ताया विभाषाया व्यवस्थित विभाषात्वस्य न्याम एवोक्तत्वेन नारायण इत्यत्रापि नलोपाभावाद्युप-पत्तेः । यद्वा नसमासोऽस्तु । अत्र 'पूर्वपदात् संज्ञायामगः' इति णत्वं ल्युटष्टित्करणसामर्थ्येनायनशब्देऽधिकरणे त्रिलिंग इति पुल्लिंगत्वं च द्रष्टव्यम । पृथङ्नतिरिति इत्यत्रेतिशब्दस्य 'इत्यरुचिं सूचयती'ति पूर्वेण अन्वयः । विघ्नाभावस्य नमस्कारेणैव सिद्धेर्ग्रथनं व्यर्थं, एवमधिकार्यादिसूचनस्य प्रवृत्त्यङ्ग-तया वक्तव्यत्वेऽपि(कर्तव्यत्वेपि) न महाफलार्थं तत्कार्यं, तत्स्मरणेनैव फलसिद्धे-रित्यत आह — **नमस्काराधिकार्यादिग्रथनसूचने इति** ।। **अनन्यार्थ-तयेति** ।। प्रातीतिकार्थान्तरपरं न भवतीत्यनेन प्रकारेणेत्यर्थः ।। **प्रायस्त-देवोपादेयमिति** ।। अप्रमाणत्वादिना निश्चितस्यापि ख्यात्याद्यर्थं व्याख्यान-दर्शनात्प्राय इत्युक्तम् । 'अथेच्छानिष्टे'ति भाष्ये अथेत्यस्यावतारानन्तरमेव, न तु परोपदेशमपेक्ष्य, येन स्वतः सार्वज्ञं न स्यादित्यर्थः । वेदमुत्सन्नमित्यादे-रित्यस्य इत्यर्थ इति वक्ष्यमाणेनान्वयः ।। **अवान्तरवेदादिविभागकथन-मिति** ।। स्वत एव ऋङ्निगदादिरूपादेकैकस्मात् महावेदादुद्धृतस्य अवा-न्तरस्य ऋगादिवेदस्य चतुर्विंशत्यादिशाखाभेदेन । आदिपदेन शाखानां च उपशाखाभेदेन विभागकथनमित्यर्थः । **यद्वा** महावेदस्यावान्तरवेदत्वेन' आदिपदेन चतुर्विंशत्यादित्वेन च विभागकथनमित्यर्थः ।। **तदल्पाक्षरत्व-मिति** ।। यावदक्षरतां विना विवक्षितार्थासिद्धिः तदर्थप्रतिपादनाय ततो ऽधिकाक्षरानुपादानमल्पाक्षरत्वमित्यर्थः ।। **बहुशाखानिर्णायकत्वमिति** ।। संख्याकारणसूत्रादेरपि बहुशाखागतपदार्थनिर्णायकत्वात्तन्न्याप्तिरिति ज्ञेयम् ।।

व्यर्थाक्षरादिराहित्यमिति ।। अर्थाप्रतिपादकत्वेऽपि साम्नि स्तोभाक्षराणा ऋगक्षरात्र्यामगानभागपरिपूरणायेव प्रयोजनान्तरायाक्षरप्रयोग इत्यर्थः ।। कारणान्तरसंभवादित्यत आहेति ।। 'मुख्यस्ये'ति मूलग्रन्थे मुख्यस्य निर्विशेषणशब्दवाच्यत्वे ' इति वेदविद· प्राहु'रित्यनेन वेदस्य वृद्धव्यवहारस्य च प्रमाणीकृतत्वात्तेन शङ्कायाः परिहार इति भाव. ।। शब्दसमूहैः क्रियमाण इति ।। शब्दजातस्येति षष्ठी कर्तरि, न तु कर्मणीत्यर्थः ।।

परोक्ते दूष्य एवांशो मितैः शब्दैरनूद्यते ।
दूषणं चापि हनुमद्भाष्यसूचितमुच्यते ॥

तत्र भामत्युक्तमधिकरणम् — प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वेनासन्दिग्धत्वान्न विषयत्वम् । नाप्यविद्यानिवृत्तिः प्रयोजनम् । उक्तरीत्याऽऽत्मनि भासमानेऽपि तदनिवृत्तेः । न च वाच्यमहंप्रत्ययः स्थूलोऽहं कर्ता भोक्ता दुःखीति गृह्णाति, तद्विपरीतश्च वेदान्तप्रतिपाद्यः सन्दिग्ध इति विषयादिसिद्धिरिति । वेदान्तानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगित्वेनाविवक्षितार्थत्वादुपचरितार्थत्वाद्वा । तथा च वेदान्तविचारो नारब्धव्य इति पूर्वपक्षः । सिद्धान्तस्तु – वेदान्तवाक्यैर्ज्ञानानन्दैकरसाद्वितीयोदासीनस्वभाव आत्मोपक्रमादिभिः प्रतिपाद्यते । न च क्रियासमभिहारेणेदृगात्मतत्वमभिदधति तत्पराणि सन्ति युक्तमुपचरितार्थानीति वक्तुम् । प्रत्यक्षं तु सम्भावितदोषमपौरुषेयेण निर्दोषेणागमेन बाध्यते । तेन वेदान्तवेद्यः शुद्धोऽहंप्रत्यये न भातीति विषयादिसिद्धिरिति । तन्न । तथा हि । शुद्धो न भातीति कोऽर्थः? किमात्मस्वरूपे किंचिद्भाति किंचिन्न भातीति । किं वाऽऽत्मस्वरूपमेव न भातीति । यद्वाऽनात्मापि भातीति । आद्येऽभासमानोंऽशः शरीरादिभ्यो भेदो वा, कर्तृत्वभोक्तृत्वाद्यभावो वा, ब्रह्मात्माभेदो वा, द्वितीयमात्राभावो वा? आत्मभिन्नः सत्यश्चेदपसिद्धान्तः । अभावद्वैतं त्वन्यत्र निरस्तम् । मिथ्या चेन्न तत्वावेदकशास्त्रवेद्यः । आत्ममात्रत्वे तु द्वितीयपक्षान्तर्भावः । तथापि कल्पितेन भेदेनागृहीत इव भातीति चेन्न । तदन्तो गृह्य

माणेऽधिष्ठाने भेदकल्पनाया अगृहीतत्वारोपस्य चायोगात् । न च मिथ्याभूतेनापि तेनोपलक्षित आत्मा शास्त्रवेद्यः, स च सत्य इति वाच्यम् ; स्वप्रकाशत्वेन नित्यसिद्धात्मावबोधनार्थमुपलक्षणोक्त्ययो ात । उपलक्षण एव तात्पर्ये चाप्रामाण्यापातात् । अत एव न द्वितीयः । तस्य स्वप्रकाशत्वेनाभानायोगात् । स्वप्रकाशस्याप्यविद्यावशादभाने अविद्यादेर्दुःखादेश्च प्रकाशो न स्यात् । तस्य चैतन्यप्रकाशाधीनप्रकाशत्वोपगमात् ॥

एतेन स्वप्रकाशत्वात्स्फुरति चैतन्यमविद्यावृतत्वाच्च न स्फुरति । न च विरोधः । स्फुरणस्य तात्त्विकत्वादस्फुरणस्य चातात्त्विकत्वात् । एवं च न कोऽपि दोषः । स्फुरत्त्वादज्ञानादिसाधकत्वस्यास्फुरत्त्वाद्विषयत्वस्य च संभवादिति निरस्तम् । स्फुरत्यस्फुरणारोपायोगस्योक्तत्वात् । न च स्वरूपचितः प्रकाशोऽपि तस्या अज्ञानाविरोधित्वात् विरोधिन्याश्च वृत्तेरभावेनाविद्यावृतत्वात्संदिग्धत्वमिति युक्तम् । स्वरूपचितोऽज्ञानाविरोधित्वे तद्वेद्ये दुःखादावज्ञानप्रसङ्गात् । त्वन्मते अयं घट इत्याद्यपरोक्षवृत्तेरपि घटाद्यवच्छिन्नचिद्विषयत्वाच्च । श्रवणादिजनितसंस्कारसहितान्तःकरणवृत्तिनाश्यत्वे च मिथ्यारूप्यादौ तददर्शनात्सत्ये भ्रमरादिध्याननिवर्त्यकीटत्वादौ च तद्दर्शनादज्ञानस्य सत्यत्वं स्यात् । न तृतीयः । अनात्मनो अधिकस्य भानेऽप्यात्मनो असंदिग्धत्वेनाविषयत्वतादवस्थ्यात् । अधिष्ठाने तत्वतः स्फुरत्यनात्मारोपायोगाच्च । एतेन यथा षड्जादयो गान्धर्वशास्त्राभ्यासात्प्रागपि स्फुरन्तस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते, व्यज्यन्ते तु शास्त्रवासितेन तेन । एवं वेदान्तवाक्यजन्यब्रह्मैक्याकारवासनावासितान्तःकरणेन तद्भावाभिव्यक्तिर्नप्रागिति भामत्युक्तं निरस्तम् । तत्र प्रागस्फुरतः पश्चाच्च स्फुरतः षड्जत्वादिजातिभेदस्यैव प्रकृते तस्याभावात् । एतेनैव तत्त्वमसीतिवाक्याद्यद्यप्यात्मनो ब्रह्मत्वं ज्ञातं, तथापि वादिविप्रतिपत्त्या संशयात्तत्र जिज्ञासेति भामत्युक्तं निरस्तम् । चिन्मात्रे धर्मिणि निश्चिते तन्मात्रैक्ये संशयायोगात् । युक्तं चापौरुषेयस्याप्यागमस्य शङ्कितात्पर्यभ्रमरूपदोषस्य यजमानः प्रस्तरः इत्यादेरिव प्रत्यक्षविरोधेन प्रतीतार्थप्रच्यावनम् । उक्ता च त्वयापि तत्त्वमसिवाक्ये प्रत्यक्षाविरोधाय लक्षणा ।

तस्मात्परमते स्वरूपमात्रस्य स्वप्रकाशत्वेन नित्यसिद्धत्वादन्यस्य चाज्ञानकल्पित-त्वेन ज्ञानविषयत्वायोगेनाज्ञानसंभवादज्ञातो विषयोऽज्ञाननिवृत्तिः फलमज्ञानी चाधिकारी न युक्त इति शास्त्रमनारम्भणीयमेवेति **भामतीमत** तावदयुक्तम् ॥

एतेन न प्रत्यग्ब्रह्मैक्यं विषयः । कर्तृत्वादेर्विरुद्धधर्मस्य सत्यत्वेनैक्या योगात् । नापि तन्निवृत्ति प्रयोजनम् । ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य ज्ञानान्निवृत्त्ययोगादिति प्राप्ते, सत्यं कर्तृत्वभोक्तृत्वादिप्रपञ्चस्य सत्यत्वे विषयादिर्न सिध्यतीति । प्रपञ्चस्तु मिथ्यैव । अत एव भाष्येऽध्यासवर्णन मिति विवरणाभिप्रेतमधिकरणमपि निरस्तम् । कर्तृत्वादिविशिष्टस्य संभावित दोषेणातत्वावेदकेन प्रत्यक्षानुमानादिना मिथ्याभेदे गृहीतेऽपि तात्विकाभेदे मानान्तरविरोधाभावेन तत्त्वंपदमुख्यार्थत्वाय तल्लक्षिते चिन्मात्रे भेदप्रसक्त्या तत्त्वमसिवाक्यावैयर्थ्याय च विशिष्टस्यैव निर्दोषया श्रुत्या तात्विकाभेदबोधन-संभवेन विषयार्थमध्यासस्यावक्तव्यत्वात् । न च विरुद्धधर्मस्य सदा सत्वे भेदस्तात्विक एव स्यादिति वाच्यम् । अस्याप्यनुमानस्य श्रुतिविरुद्धत्वेना तात्विकविषयत्वात् । नापि प्रयोजनार्थं तदुक्तिः । सेत्वज्ञानाकार्यस्यापि पापस्य सेतुज्ञानान्निवृत्तेः । विस्तृतं चैतदन्यत्र । तस्मान्न विवरणमतमपि युक्तम् ॥

केचित्तु वृद्धव्यवहारेण कार्य एव शब्दाना व्युत्पन्नतया सिद्धे ब्रह्मणि वेदान्तानामप्रमाण्याद्विचारो नारम्भणीय इति प्राप्ते, अम्बातातादीनङ्गुल्या निर्दिश्याम्बातातादिशब्देषु प्रयुक्तेषु बालाना तेषु तच्छब्दाना प्रथमव्युत्पत्ति-दर्शनात् ब्रह्मणि वेदान्ताना प्रामाण्यसंभवाचद्विचार आरब्धव्य इति सिद्धान्त इत्याहुः । तत्र ब्रूमः — अथ कर्मविचारानन्तरमतः कर्मणां विचारितत्वादेव ब्रह्मविचारः कर्तव्य इति हि तव सूत्रार्थः । न चात्राथशब्दादिना कार्ये व्युत्पत्तिनिरासः प्रतीयते । न च सौत्रपदनिरस्यैर्हेतुभिः सूत्रावतारिकारूप पूर्वपक्षसभवे हेत्वन्तरेण स युक्तः । न च विधिवाक्यस्थस्यास्य ब्रह्मशब्दस्य स्वप्रधाने सिद्धे व्युत्पत्तिरद्यापि सिद्धा, येन तत्प्रयोगात्सा सूच्येत । किञ्च 'अथातो धर्मजिज्ञासे'त्यादि 'अनावृत्तिः शब्दा'दित्यन्तं विंशतिलक्षणमेकं शास्त्रमिति वदता त्वया चतुर्लक्षणी देवमीमामा द्वादशलक्षण्याः कर्ममीमांसाया

उत्तरा, ब्रह्ममीमांसायास्तु पूर्वेति स्वीकृतत्वेन सिद्धे व्युत्पत्त्यभावे सिद्धरूपदेवमीमांसानुपपत्तेस्तस्यास्तत्रैव सिद्धत्वात्पुनरिह सिद्धे व्युत्पत्त्यभावेन पूर्वपक्षो न युक्तः । अत एव सिद्धान्तोऽप्ययुक्तः । त्वद्रीत्या सिद्धे व्युत्पत्तेरतश्शब्दादिनाऽबोधनात् । ∴ विचारकर्तव्यताहेत्वर्थेनातश्शब्देनोक्तस्याथशब्दादिना सूचितस्य च तत्र हेतुत्वसंभवे तद्विपरीतायाः सिद्धे व्युत्पत्तेस्तत्र हेतुत्वायोगात् ॥

तदेव मतान्तरीयमधिकरणमयुक्तमिति हृदि निधाय स्वमतेनाधिकरणमारचयति—**तत्रेदमित्यादिना** ॥ अध्यायपादसंगतिस्त्विति ॥ यद्यप्येतदधिकरणाभावे शास्त्रस्येव तदेकदेशयोरध्यायपादयोरप्यारम्भासंभवः; तथापि सिद्धे शास्त्रारम्भे पुनरध्यायाद्यारम्भाक्षेपस्यानेनासमाधानाच्छास्त्रेणेव न ताभ्यामौपोद्घातिकी संगतिरित्यर्थः । यद्वा यथा तद्विजिज्ञासस्वेत्यादिब्रह्मविचारविधायकवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वाद्ब्रह्मविचाररूपेण शास्त्रेणान्तर्भावलक्षणा संगतिः न तथाऽध्यायपादाभ्याम् । समन्वयतद्विशेषाप्रतिपादकत्वादित्यर्थः । यथोक्तमसंगतिस्तावद्द्विविधा । अन्तर्भावलक्षणा आनन्तर्यलक्षणा चेति । अत एवोक्त सुधायां 'अत एवास्य सूत्रस्य न शास्त्रबहिर्भाव' इति । एतेन प्रथमसूत्रस्य समन्वयाद्यशेषविचारहेतुत्वाच्छास्त्रप्रथमाध्यायप्रथमपादसंगतय इति **कल्पतरूक्तं** निरस्तम् । द्वितीयाध्यायतो व्यावृत्तस्य शास्त्रसङ्गत्यतिरिक्तस्य प्रथमाध्यायादिना सङ्गतिविशेषस्यानुक्तत्वेनाध्यायपादपीठत्वमात्रस्य न्याय्यत्वात् । एतेनैव श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तद्द्वारेण विचार्यमाणवेदान्तवाक्यानामपि ब्रह्मणि समन्वयस्य च निमित्तत्वादाद्यं सूत्रं समन्वयेन सङ्गतमिति **विवरणोक्तं** निरस्तम् । तत्तद्वाक्यस्य स्वार्थे समन्वयप्रतिपादनमात्रेण समन्वयाध्यायसङ्गतौ तृतीयाध्यायादेरपि समन्वयसङ्गतिप्रसङ्गात् । विचारकर्तव्यताप्रतिपादनेन ब्रह्मणि समन्वयनिमित्तत्वस्येवाविरोधादिनिमित्तत्वस्यापि सत्वेन द्वितीयादितो व्यावृत्तस्य प्रथमेन सङ्गतिविशेषस्यासिद्धेश्च । पादसङ्गत्यनुक्तेश्च ॥

ननु तथाप्यानन्दमयाधिकरणमारभ्येति कथम्? समन्वयसूत्रे साक्षात्समन्वयोक्तेः 'समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्चप्रपञ्चकभावसङ्गति' रिति सुधाग्रन्थाच्च तत्राध्यायसङ्गतेः सत्वात् । ईक्षत्यधिकरणे समन्वयासाधारणहेतुवाच्य-

त्वसमर्थनेन तस्मिन्नपि तस्याः सत्त्वात् । न चेक्षतौ वचनवृत्त्या जगत्कारणत्वादिना शास्त्रैकजन्यप्रमागोचरत्वरूपशास्त्रयोनित्वे अवाच्यत्वरूपं बाधकमेवोद्धृतम्, न तु समन्वये हेतुरुक्त इति वाच्यम् । 'तदभावे कुतोऽन्वयः' इति अनुव्याख्याने वाच्यत्वस्य समन्वयहेतुत्वेनोक्तत्वादिति । उच्यते । वैदिकशब्दानां ब्रह्मण्युपक्रमादिलिङ्गप्रमाणकः शक्तितात्पर्यलक्षणः संबन्धः समन्वयः । स च न समन्वयसूत्रव्युत्पाद्यः । तत्र तत्प्रमाणस्यानुक्तेः । किन्तु व्युत्पादयिष्यमाणः सशास्त्रयोनित्वे हेतुत्वेन सिद्धवदुपन्यस्तः । ईक्षतावाच्यत्वप्रयुक्तासमन्वयासंभवाशंकैव निरस्ता । समन्वयस्तु न व्युत्पादित इति न तयोरध्यायपादाभ्यामन्तर्भावलक्षणा सङ्गतिः । यद्वा आनन्दमयाधिकरणमारभ्य सङ्गतिद्वयम् । ततोऽर्वाक्समन्वयेक्षत्योः पादमात्रेण सङ्गत्यभावः । अन्येषु त्वध्यायेनापीति सङ्गत्योरभावः पञ्चाधिकरणीसाधारणः । अत एवाध्यायपादसङ्गतिरिति समुदायैकवचनं प्रयुक्तमिति । **अध्यायपादपीठत्वादिति** । पञ्चाधिकरण्याः समन्वयविशेषाप्रतिपादकत्वात् अध्यायाद्यन्तर्भावासंभवेऽपि विचारकर्तव्यतायाः प्रथमं प्रतिपाद्यत्वाद्वक्ष्यमाणक्रमेण चतुरधिकरण्या बद्धक्रमत्वात्तदनन्तरमेव समन्वये आकाङ्क्षोदयात्तदाकांक्षोत्थापकतया समन्वयाध्यायस्य तदादिनामपादस्य चादौ निवेशो युक्त इत्यर्थः । **नाधिकरणश्रुतिसङ्गती इति** । पूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गती नेत्यर्थः । एतेनाध्ययनविधिना सामान्यतः प्रयोजनवदर्थावबोधपरतां नीतैः विशेषतश्च संदिह्यमानैर्वेदान्तैर्विचाराकांक्षैराक्षेपादस्याधिकरणस्य श्रुतिसङ्गतिरिति कल्पतरूक्तं निरस्तम् । श्रुतिमूलत्वातिरिक्तायाः श्रुतिसङ्गतेरनुक्तत्वादिति ॥

संदेहबीजपूर्वस्य टीकादावेव कीर्तनात् ।
अस्माभिः पूर्वपक्षश्च सिद्धान्तश्च विविच्यते ॥
उपन्यासमुखेनैव टीकार्थोऽपि निरूप्यते ।
पूर्वपक्षादिमेयानामविक्षिप्तत्वसिद्धये ॥

अत्र वेदार्थनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रमनारम्भणीयमुतारम्भणीयमिति चिन्ता । तदर्थं न्यायानुसन्धानरूपविचारो न कर्तव्य उत कर्तव्य इति ।

तदर्थं विचारविधेर्विषयादिकं न सम्भवत्युत सभवतीति। तदर्थं विषयभूतं ब्रह्म किं प्रत्यगर्थभूतजीव एव उत तदन्यदिति। यदि तु ब्रह्म प्रत्यगर्थ एव तदा तस्य निश्चितत्वेन विषयाद्यसंभवाच्छास्त्रमनारम्भणीयमिति पूर्वपक्षे फलफलिभावः। यदि तु ब्रह्म प्रत्यगर्थादन्यत्तदा प्रत्यगर्थस्य जीवस्य निश्चितत्वेऽपि ब्रह्मणो विषयत्वसंभवाच्छास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः। एवमुत्तरत्रापि फलफलिभाव ऊह्यः। यत्र त्वस्पष्टस्तत्र वक्ष्यते॥

**पूर्वपक्षस्तु** – न शास्त्रमारम्भणीयम्। न्यायानुसन्धानात्मकविचाररूपजिज्ञासाया एवाकर्तव्यत्वात्। तदकर्तव्यत्वं च निर्विषयत्वादिहेतुभ्यः तत्र तावद्विषयत्वेनाभिमतं ब्रह्म न जीवचैतन्याद्भिन्नम्, मानाभावात्। कर्मकाण्डस्य कर्मपरत्वात्। वेदान्तैश्चोपक्रमादिभिरद्वैतिरीत्याऽखण्डप्रत्यगात्ममात्रप्रतिपादनात् तस्य चाहमिति स्वप्रकाशतया भासमानत्वात्। अन्यस्य च सत्यस्याभावात्। आत्मनश्चास्वप्रकाशत्वे तत्प्रकाशः किं तार्किकरीत्या मानसानुभवेन किं वा प्राभाकररीत्या स्वप्रकाशसंविदाश्रयतया। नाद्यः। तस्यापि परप्रकाश्यत्वेनानवस्थानात्। कस्य चिदनुभवस्य स्वप्रकाशत्वे च लाघवादात्मन एव तदस्तु। न च ज्ञानं जिज्ञासितग्राह्यम्। जिज्ञासा च न सर्वत्रेति नानवस्थेति वाच्यम्। ज्ञानस्य सुखदुःखादिवज्जिज्ञासाभावेऽप्यनुभवात्। अन्यथा जिज्ञासायाः ज्ञानाख्यधर्मिज्ञानसाध्यत्वानुभवादनवस्था स्यात्। न च जिज्ञासा न ज्ञानधर्मिका, किन्तु अहं ज्ञानी न वा, घटो ज्ञातो न वेत्यात्मादिधर्मिकैवेति वाच्यम्। तादृशजिज्ञासाया अननुभवात्। ननु न ज्ञानमात्रमजिज्ञासितग्राह्यं, येनानवस्था। नापि जिज्ञासितग्राह्यम्, येनानुभवविरोधः। किन्तु किञ्चिज्ज्ञानम् कदापि न ज्ञायत एवेति न कोपि दोषः इति चेन्न। कदाप्यज्ञायमानज्ञानस्यासत्वापातात्। न द्वितीयः। सुषुप्तावात्मातिरिक्तज्ञानाभावादात्मानुभवाभावेनैतावन्तं कालं सुखं सुप्तोऽस्मीत्यौत्तरिकानुस्मृत्यनुपपत्तेः। किञ्चात्मन औत्तरिकानुस्मृत्यन्यथानुपपत्त्या संविद्रूपत्वान्न संविदाश्रयत्वम्। अस्तु वा तार्किकादिरीत्याऽहमर्थप्रकाशः, तथापि प्रत्यगात्मनोऽसन्दिग्धत्वादविषयता। टीकायां तु न्यायविवरणानुसारेण वस्तुस्थितिप्रदर्श-

नाय स्वप्रकाशतोक्ता । अत एव सुधायां स्वप्रकाशतया वा स्वप्रकाशज्ञानाश्रयतया वा मानसप्रत्यक्षवेद्यतया वा सिद्धत्वेनेत्युक्तम् ॥

एतेन कर्मकाण्डस्येव ब्रह्मकाण्डस्याप्यर्थनिर्णयाय विचार आवश्यक इति निरस्तम् । धर्मवद्ब्रह्मकाण्डार्थस्यात्मनः परप्रकाश्यत्वाभावात् । एतेनैव जीवचैतन्यस्वरूपस्यासंदिग्धत्वेऽपि देहादिभिन्नत्वादानन्दाद्यात्मकत्वादिना सदिग्धत्वाद्विषयता । अन्यथा सिद्धान्तेऽप्युत्तरत्र जीवविचारो न युक्तः स्यादिति निरस्तम् । सिद्धान्त इव पूर्वपक्षे जीवचैतन्यातिरिक्तस्य देहादिभिन्नत्वादेः सत्यत्वाभावात् ॥

केचित्तु जीवस्याकारान्तरेण सदिग्धतया विचारसंभवेऽपि सिद्धान्त्यभिमतजीवान्यब्रह्मविचाराक्षेप इत्याहुः । तन्न । न्यायविवरणविरोधात् । तावता शास्त्रानारम्भासिद्धेश्च । सिद्धचैतन्यमात्रबोधने श्रुतेरनुवादकत्वे च वायुक्षेपिष्ठादिवाक्यवत्, विद्वद्वाक्यवच्च न्यायप्राप्तत्वात्सह्यम् । वेदान्ताध्ययनं जपार्थमस्तु । एवं च यथाऽर्थवादाधिकरणेऽपौरुषेयत्वेऽप्यर्थवादानामक्रियार्थत्वेन विध्येकवाक्यत्वाभावादानर्थक्यमिति भाट्टमते पूर्वः पक्षः, प्राभाकरमते चार्थवादानां विध्येकवाक्यत्वेऽपि हेतुसमर्पकत्वाद्धेतुसापेक्षत्वेन चोदनानामप्रामाण्यमिति पूर्वपक्षः, यथा वा परमते शास्त्रयोनिसूत्रे कारणवाक्यमनुमानप्राप्तकारणानुवादीति ईक्षत्यधिकरणे च सांख्यस्मृतिप्राप्तकारणानुवादीति पूर्वः पक्षः, तथेहापि स्वतःसिद्धप्रत्यगात्मानुवादका वेदान्ता न विचार्या इति पूर्वः पक्षः । यद्वा प्रमाणभूतवेदान्तवाक्यगतिर्न पूर्वपक्षिणा वाच्या । तदाच्छादनेन तत्प्रवृत्तेः । किंतु प्रमेयस्य ब्रह्मणोऽद्वैतिरीत्या स्वप्रकाशप्रत्यगात्माभेदान्न विचार्यतेति प्रमेयाश्रयणेनैव पूर्वपक्षः । अत्र चाद्ये पक्षे प्रमाणभूतवेदविचाररूपेणापि विचारस्याकर्तव्यताऽभिप्रेता । द्वितीये तु प्रमेयभूतब्रह्मविचाररूपेणैव ॥

केचित्तु वेदमात्रस्य कार्यपरत्वान्न जीवादन्यद्ब्रह्मास्ति । जीवस्त्वसंदिग्ध इति पूर्वपक्ष इत्याहुः । **तन्न** । प्राभाकररीत्या पूर्वपक्षकरणे न्यायविवरणे

आत्मनः स्वप्रकाशत्वोक्त्ययोगात् । जीवस्य देहादिभिन्नत्वेन विचार्यत्वसंभवेन शास्त्रानारम्भासिद्धेश्च । सुधायां त्वनुव्याख्याने सिद्धे व्युत्पत्त्यादेरतश्शब्दार्थत्वेनोक्तत्वात्तद्व्यावर्त्यपूर्वपक्षे कार्ये व्युत्पत्तिरुक्ता । इह तु टीकाया न्यायविवरणोक्तब्रह्मशब्दव्यावर्त्यपूर्वपक्ष उच्यत इति नेह सा वक्तव्या ॥

अन्ये तु आत्मनः स्वतः सिद्धत्वेऽपि प्रमाणतः सिद्ध्यभावा(त्सिद्ध्यविषयत्वा)त्सिद्ध्यविषयत्वाद्वा तत्प्रत्यायकानां वेदान्तानां नानुवादकतेत्याहुः । तदपि न । तत एवात्मनो विषयत्वस्यापि संभवेन निर्विषयत्वपूर्वपक्षायोगात् । नापि जिज्ञासायाः प्रयोजनमस्ति । प्रत्यग्रूपे ब्रह्मण्यहमिति ज्ञायमानेऽपि मोक्षानुपलंभात् । विषयाद्यभावादेव नाधिकारी । नापि सबन्धः । ननु कथं तर्हि श्रोतव्य इति विचारविधानम् । न च तदाच्छादनेन पूर्वपक्षः । विचारविधिवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वादस्याधिकरणस्य तदाच्छादनायोगादिति चेन्न । वक्ष्यमाणरीत्या श्रवणस्य विचाररूपत्वाभावात् । मन्तव्यः सोऽन्वेष्टव्य इत्यादेश्च ब्रह्मपरतयाऽभिप्रेतवाक्यमध्यस्थतया विष्णुरुपांशु यष्टव्य इत्यादिवत्कृत्यप्रत्ययस्यार्हार्थत्वेनाप्युपपत्तरविधायकत्वात् । नापि 'आत्मन्येवात्मानं पश्ये'दिति 'तद्विजिज्ञासस्वे'ति वा विधिः । मुख्यार्थयोर्ज्ञानेच्छयोरविधेयत्वात् । विधौ च लक्षणाया अन्याय्यत्वात् । अनयोरपि ब्रह्मपरतया 'यदभिघारयेद्रुद्रायास्ये पशून्निदध्या'दित्यादिवल्लिङो विधिशक्तिप्रतिबन्धाच्च । एतेन 'तस्माद्ब्राह्मणः पाण्डित्य'मित्यादेरपि विचारविधित्वं निरस्तम् । विचारस्य ज्ञानहेतुताया अन्वयव्यतिरेकप्राप्तत्वेन विध्यनपेक्षणाच्च । नियमपरिसंख्ययोश्च आत्मनः शब्दैकगम्यतया साधनान्तरप्राप्त्यभावेनायोगात् । एतेनान्यपरतया प्रतीतस्यापि 'उपरि हि देवेभ्यो धारयती'त्यादेरिव तद्विजिज्ञासस्वेत्यादेरपि विधित्वमस्त्विति निरस्तम् । प्रकृतस्य त्वन्मते वस्तुतोऽन्यपरत्वात् । तद्वत्प्रकृतेऽप्राप्तेरभावाच्च । नाप्यध्ययनविधेरर्थज्ञानपर्यन्ततया तदाक्षिप्तो विचार इति युक्तम् । स्वमते तस्य नित्यत्वेनार्थज्ञापनपर्यन्तत्वायोगात् । यद्वा स्वर्गकामाधिकरणपूर्वपक्षे विश्वजिदधिकरणपूर्वपक्षे च फलाभावेन नियोज्याभावेन च 'स्वर्गकामो यजेत, विश्वजिता यजेते'त्यादिवाक्यमिव उक्तरीत्या विषयाद्यभावेनोपपत्तिविरोधात्तद्विजिज्ञासस्वे-

त्यादिकमप्रमाणम् । अत एवोक्तं विचारविधायकवाक्याना गतिद्वयमभ्युपेत्य सुधाया तद्विजिज्ञासस्वेति श्रुत्यर्थस्याद्याप्यनिर्णीतत्वेनेत्युक्तम ॥

केचित्तु तद्विज्ञासस्वेत्यादिक जीवात्मनो विचारविधायकम्, न तु ब्रह्मण इति सुधाभिप्राय इत्याहुः । तन्न । जीवस्यासदिग्घत्वप्रतिपादकन्याय विवरणविरोधस्य विचारमात्राक्षेपकपूर्वपक्षानानुगुण्यस्य चोक्तत्वात् । तदेतभि प्रेत्योक्तं **न्यायविवरणे** 'जीवव्यतिरिक्तेश्वराभावत्तस्य च स्वप्रकाशत्वान्न जिज्ञा स्यते'ति । एवं प्राप्ते सिद्धान्तितं भगवता सूत्रकारेण —

**1—ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १-१-१ इति ॥**

सिद्धान्तसंक्षेपस्तु—

जिज्ञास्यब्रह्मशब्देन गुणपूर्त्यभिधायिना ।
अपूर्णत्वेनानुभूताज्जीवाद्भिन्नं प्रतीयते ॥ १ ॥

जिज्ञास्यमेव ब्रह्म । तद्विजिज्ञासस्व तद्ब्रह्मेत्यादिश्रुतेः । श्रौतब्रह्म शब्दोक्त्या गुणपूर्त्याऽल्पगुणत्वेनानुभूयमानाज्जीवाद्भिन्नत्वेन सदिग्धत्वाच्च ॥

निर्दोषश्रुतिसाक्षिभ्या प्रमिते ब्रह्मजीवयोः ।
गुणपूर्त्यल्पगुणते मिथ्येति च न युज्यते ॥ १ ॥

न केवलमथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इति श्रुत्या **गुणपूर्तिर्ब्रह्मशब्दार्थः** । किन्तु ब्रह्मशब्दावयवशक्त्यापि । अपरिच्छेदे हि तस्यावयवशक्तिः परस्यापि सम्मता । गुणपरिच्छेदोऽपि चापरिच्छेद एव । न च सकोचे हेतुरस्ति । अन्यथा कालमात्रापरिच्छेदस्तदर्थः स्यात् । वक्ष्यते चैतत्सौत्रब्रह्मशब्दव्याख्यानावसरे । टीकायान्तु देशमात्रापरिच्छेदार्थत्वेऽपि तावतैवाणोर्जीवाद्भेदसिद्धेस्तदुपेत्योक्तम् । न च मन्तव्य इत्यादेर्विष्णुरुपांशु यष्टव्य इत्यादिवदविधित्वमिति वाच्यम् । तत्र जामितादोषोपक्रमतन्निर्हरणान्तै कवाक्यमध्यस्थाना विष्ण्वादिवाक्याना विधित्वे प्रतीतैकवाक्यताभङ्गादेरिव प्रकृते बाधकस्याभावात् । अन्यथा 'स्वाध्यायोऽध्येतव्य' इत्यत्राप्यदृष्टार्थत्व प्रसङ्गात् । प्रयाजादिवाक्यस्य स्वयमवान्तरवाक्यतया विधायकस्यापि पुनर्दर्श

पूर्णमासादिवाक्येन वाक्यैकवाक्यतावत्प्रकृतेऽपि पृथग्वाक्यत्वेऽपि ब्रह्मपर वाक्येन वाक्यैकवाक्यतोपपत्तेश्च । यदभिचारयेदित्यादौ 'अभिचार्यस्त्र्यम्बका नाभिचार्या इति मीमांसन्त' इति मीमांसासमभिव्याहारेणैव 'यस्योभय हविरार्ति मार्च्छे'दित्यादौ निमित्तत्वाभिधायकयच्छब्दादिनेव च तद्विजिज्ञासस्वेत्यादौ केन चिद्विधिशक्तिप्रतिबन्धाभावाच्च । आत्मन्येवात्मानं पश्येदित्यादावपि दर्श नस्य लक्षितस्य विचारस्य वा विधिसम्भवाच्च । सति बाधके विधावपि लक्षणाया· स्वीकृतत्वाच्च । अध्ययनविधेरपि विचाराक्षेपकताया विचारविधेरपूर्वविधि त्वादेश्च अन्यत्रोक्तत्वाच्चेति । तदेतदभिप्रेत्योक्त न्यायविवरणे 'तद्विजिज्ञासस्व तद्ब्रह्मेति ब्रह्मशब्देन पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुणजीवाभेद' इति ॥

नन्वत्रानुव्याख्याने 'तत्र ताराथमूलत्व'मित्योंकारस्य सूत्रादित्वमुक्त्वा 'ओतत्वाची ह्योंकार' इति स व्याख्यातः । सुधाया च 'सर्वत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत' इति श्रुतिबलात्प्रतिसूत्रं ब्रह्मविद्यात्वादाद्यन्तयोरोंकारस्योहः कार्यः । न चोह्यमानं वाक्यात्पृथक् । मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्व- प्रसगात् । ओंकारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेनावयवत्वनिश्चयाच्च । असंहिततया निर्देशस्तु सर्वसूत्रेष्वनुगतिसूचनाथ' इत्युक्तम् । तत्कथम् ? सूर्या- येत्यूहं प्रति अग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावात् । यथोक्तम्—

प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगो विकृत ऊह्यमानतयोदित' इति ॥

न चोहशब्देनाध्याहारो लक्ष्यत इति वाच्यम् । 'स यज्ञपतिराशिषा इषे त्वे'त्यादाविव साकाङ्क्षत्वाभावात । किञ्च मन्त्रेष्वप्यूह्यमानस्य तदनवय- वत्वमिष्टमेव । ऊहप्रवरनाममन्त्रस्य द्वितीये सिद्धान्तितत्वात् । अपि च ओतत्वस्य न वाक्यार्थेऽन्वय ब्रह्मण· शब्दत उपसर्जनस्य पदान्तरोपात्तौ तत्वान्वयानुपपत्ते· । अपि चार्थप्रतीत्यर्थत्वे आदावेव प्रयोगेण चरितार्थत्वा दन्ते प्रयोगवैयर्थ्यम् । किञ्च ओंकारस्योत्तरत्रानुषङ्गे अनुषक्तस्य 'ड्याप्प्राति पदिका'दित्यादेः अच्छिद्रेण पवित्रेणेत्यादेः तनूर्वर्षि ष्ठेत्यादेश्च तत्र तत्रार्थान्वय- दर्शनात्प्रकृतेऽप्योंकारार्थस्य जन्मादिसूत्रेष्वन्वयो वाच्यः । स चाशक्य इति ।

उच्यते । नात्रोहशब्दो मन्त्रसाममंस्कारोह इत्यादाविव कर्मव्युत्पत्त्या विकारपर· । किन्तु 'अध्याहारस्तर्क ऊह' इति प्रसिद्धेर्भावव्युत्पत्त्याऽध्याहारवाचकः । अत एव टुप्टीकाया नवमे 'ऊहो नाम तर्कणा । सा चैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणे'त्यादिना तर्क एव मुख्य ऊहः । तद्विषयत्वान्मन्त्रादेरन्यथात्वमप्यूह इत्युक्तम । तत्र च स्रवत्यनोंकृतमिति श्रुतिरेव मानम । यद्यप्यत्र स्रवणविशरणपरिहाररूपादृष्टफलार्थत्वं श्रुतम् । तथापि दृष्टस्यापेक्षितस्यार्थप्रत्ययस्यापि फलत्वसंभवान्न तत्त्यागः । एवञ्च स्विष्टकृदादिवदोंकारोच्चारणमुभयार्थम् । अत एव नान्ते प्रयोगवैयर्थ्यम । नाप्युत्तरसूत्रे ओङ्कारार्थस्यानन्वयदोष । तत्र दृष्टासंभवेन केवलादृष्टार्थत्वोपपत्तेः । न चैकस्यैकत्रोच्चारणे दृष्टार्थे अन्यत्रापि तथात्वनियमः । मन्त्राणां प्रयोगकाले उच्चारणस्य दृष्टार्थत्वेऽपि जपकाले तस्यादृष्टार्थत्वदर्शनात । अन्वेनं मातेत्यादावेकत्वस्यैकपशुके दृष्टार्थत्वेऽपि बहुपशुकेऽदृष्टार्थत्वदर्शनाच्च । 'न माता वर्धत' इति श्रुत्या मात्रादिशब्दे ऊहनिषेधात । अध्याह्रियमाणस्यापादितमन्त्रावयवत्वं च मन्त्रेण सहैककार्यकारित्वाभाव इति नेष्टापत्ति· । जिज्ञासान्वितनया प्रथमं प्रतीतस्यौतत्वस्य तत्रासभवेन सप्तदशारत्निर्वाजपेयस्य यूप' इत्यादाविवाङ्गावतारन्यायेन तदुपसर्जनब्रह्मान्वयसभवाच्च । अर्थवादार्थ(स्य) प्राशस्त्यस्य यजेतेत्यत्रोपसर्जनीभूतयागविशेषणत्वदर्शनाच्च । दण्डी प्रैषानन्वाहेत्यादौ दण्डस्योपसर्जनस्य विध्यन्वयदर्शनाच्च । उक्तं च वार्तिके 'विशेषणपरत्वं च दण्डीत्यादिषु दर्शित'मिति । न च ब्रह्मशब्देनैव विषयसूचनादोंकारवैयर्थ्यम् । न केवलं जिज्ञास्ये तद्विजिज्ञासस्व तद्ब्रह्मेत्यादौ ब्रह्मपदाश्रवणात्तस्य जीवाद्भिन्नत्वेन जिज्ञास्यता । किन्तु 'ओमित्यक्षरमुद्गीथमुपासीतेत्यादौ जीवेष्वसम्भावितगुणपूर्तिवाचकोंकारादिश्रवणादपीति युक्त्यन्तरसूचकत्वात् । अदृष्टार्थमादाववश्यं प्रयोक्तव्यत्वाच्च ॥

यत्त्वध्ययनोपक्रमादावुच्चार्यमाणस्याप्योंकारस्य तदवयवत्वं सुधायामेवोक्तं तदपि तदुच्चारणस्यार्थानुसंधानद्वारैवाङ्गत्वमभिप्रेत्य । सन्न्यायरत्नावल्यां तु 'ओंकारस्तु पृथगुच्चरितो वेदितव्य· । नाथशब्दवत्सूत्रोपनिबद्ध' इति

सूत्रार्थात्पार्थक्यमेवोक्तम् । तत्रानुव्याख्याने ओतत्ववाचीत्यादिना तदर्थकथनं सर्ववेदव्याख्येयोकारार्थवाचकश्रीनारायणपदवाच्यस्य सर्ववेदार्थत्वाच्छास्त्रविषयत्वमित्यभिप्रेत्य । न तु सूत्रार्थतया । अन्यथा भर्गादिपदानामपि सूत्रावयवत्वं स्यात् । स एव भर्गशब्दार्थ इति तदर्थस्यापि कथनादिति भावः । यद्वा मास्तु 'स्रवत्यनोंकृत'मित्यनेन साधारणोंकारस्याद्यसूत्रावयवता । तथापि —

'ओंकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् ।
तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ॥
अतश्च पूर्वमुच्चार्याः सर्वे एते सतां मताः ।'

इति भाष्योदाहृतस्मृत्याऽथातश्शब्दतुल्यतयाऽऽद्यसूत्रावयवताया उक्तत्वात् अनुव्याख्याने तत्र ताराथमूलत्वमित्यथशब्दतुल्यतयोंकारस्याऽऽद्यसूत्रावयवत्वोक्तिर्युक्ता । एवं च सन्न्यायरत्नावली स्रवतीत्यादि श्रुतिप्रापितसाधारणोंकारविषया, सुधा तु ओंकारश्चेत्यादिस्मृतिप्रापितासाधारणोंकारविषयेति द्रष्टव्यम् । यद्वा सन्न्यायरत्नावल्युक्तं पृथक्त्वमूह्यमानत्वं न तु वाक्येऽनन्वय इत्यविरोध इत्यादि द्रष्टव्यम् ॥

ननु प्रतिवचनाद्यभावेन प्रश्नाद्यर्थत्वासंभवेपि 'अथ शब्दानुशासन' मित्यादाविवारम्भरूपाधिकारार्थोऽथशब्दः कस्मान्न स्यात् । अत्र परेषां भाष्यं 'ब्रह्मजिज्ञासाया अनधिकार्यत्वा'दिति । तन्न । इच्छाया आरभ्यत्वासंभवेऽपि विवरणरीत्या जिज्ञासाशब्दस्य विचारलक्षकत्वेन तस्यारभ्यत्वसंभवात् । ननु आनन्तर्याभिधानमुखेन शास्त्रीयस्याधिकारिणो न्यायतः समर्पणाभावे विचारो निरधिकारिकोऽननुष्ठेयः स्यादित्यधिकारितद्विशेषणप्रयोजनलाभायानन्तर्यार्थतेति चेन्न ; न तावद्विचारविधौ त्वत्पक्षे मुमुक्षुरधिकारी मोक्षश्च फलमिति युक्तम् । विचारो मोक्षसाधनतया न प्राप्त इति तद्विधेरपूर्वविधित्वापातात् । मुमुक्षोरपि ज्ञानकामना विना विचारेऽप्रवृत्तेः त्वन्मते च वक्ष्यमाणरीत्या ज्ञानकामनानुपपत्तेश्च । नापि विचारविधौ ज्ञानकामोऽधिकारी ज्ञानं च फलमिति युक्तम् । अध्ययनविधेर्ज्ञानकामाधिकारं निषेधता त्वया ज्ञाते ज्ञाने कामनायोगात् ।

ज्ञानज्ञाने च तदवच्छेदकविषयस्यापि ज्ञातत्वात्पुनस्तज्ज्ञाने कामनायोगादिति युक्त्या ज्ञानकामनानिषेधात् । ननु परोक्षज्ञाने कामनाऽयोगेपि परोक्षेण प्रतिबद्धापरोक्षेण वा ज्ञानेन ज्ञातब्रह्मावच्छिन्ने अपरोक्षज्ञाने अप्रतिबद्धापरोक्षज्ञाने वा कामना श्रवणरूपविचारविध्यधिकारिविशेषणमिति चेन्न इच्छाया अपरोक्षत्वात्तदवच्छेदकविषयस्याप्यपरोक्षत्वात् इच्छासमकालवृत्त्यपरोक्षज्ञानस्य विचारसाध्यत्वानुपपत्तेः । अन्यानवच्छेदेनापरोक्षज्ञानस्य विचारसाध्यत्वे च तादृशपरोक्षज्ञाने कामना तस्य विचारसाध्यत्वं चास्तु ॥

किञ्च श्रवणसाध्यस्य परोक्षज्ञानस्य प्रतिबद्धापरोक्षज्ञानस्य वा तस्मात्प्रागसत्त्वेन तदधीनाया अपरोक्षज्ञानादौ कामनायाः श्रवणविध्यधिकारिविशेषणत्वायोगः । न च कामनाहेतुपरोक्षज्ञानादिक श्रवणात्प्रागापातप्रतीतिदशायामेव सिद्धमिति वाच्यम् : तस्या दशाया निश्चयरूपस्य तस्याभावात । न हि वेदान्तवेद्य सर्वं परोक्षज्ञानादिना निश्चित्यापरोक्षार्थं मीमासाया प्रवर्तते । संदेहरूपस्य च तस्य तस्या दशायां भावेऽपि संदेहेन ज्ञातब्रह्मावच्छिन्नपरोक्षनिश्चय एव कामनोपपत्तिः । निश्चिते निश्चयकामनाया अदर्शनेन तस्य तस्या निश्चयविषयक संदेहस्यैव हेतुत्वात् । किञ्च त्वत्पक्षे धर्मविचारस्योत्तरक्रतुविधिप्रयुक्तत्वेऽपि तज्ज्ञानकामनाहीनस्य विचारेऽप्रवृत्तेः धर्मादौ चापरोक्षज्ञानानङ्गीकारात् धर्मादिविचारे न प्रवृत्तिः स्यात् ॥

किञ्च संदिग्धस्याण्वादिविशेषापरोक्षज्ञानकामनातद्विशेषपरोक्षधीपूर्विका स्यात् । तस्मात्सामान्यतो ज्ञाते विशेषज्ञानकामनाया दर्शनात्तां प्रति तदेव हेतुः । अवच्छिन्नज्ञाने अवच्छेदकज्ञानस्य हेतुतापि हि दर्शनादेवेति तदुल्लङ्घने साऽपि न स्यात् । तस्मात्परोक्षज्ञाने कामनां निषेधतः परस्य मते ज्ञाने मोक्षे वा विचारप्रवृत्तिपर्यन्तकामनाऽयोगात्तत्कामस्याधिकारिणस्तस्य फलस्य च सूचने नानन्तर्यार्थेनाप्यथशब्देन । भामतीरीत्या जिज्ञासाशब्दस्येच्छावाचकत्वेऽप्यार्थिकार्थेन विचारेणाध्याहृतस्य कर्तव्यपदस्येव श्रुतस्याधिकारार्थाथशब्दस्याप्यन्वयोऽस्तु । यथोक्तं कल्पतरौ 'आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहार' इति । न चार्थिकार्थेनाध्याहृतस्यैवान्वयो न तु श्रुतस्येत्यत्र नियामकमस्ति, 'सौर्यं चरुं

निर्वपेद्ब्रह्मवर्चसकाम' इत्यादौ द्रव्यदेवतासंबन्धाक्षिप्तेन यागेन 'यदाग्नेयोऽष्टाकपालो भवति' इत्यादौ भवनाक्षिप्तभावनया च विधिप्रत्ययान्वयदर्शनाच्च। तस्मादधिकारार्थ एवाथशब्दोऽस्त्विति। **उच्यते**। आरभ्यत इत्यनुक्त्वाप्यारब्धे इदमनेनारब्धमिति ज्ञातुं शक्यत्वादधिकार्याद्यसूचनापाताच्च नारम्भार्थः। अथ शब्दानुशासनमित्यादौ तु व्याकरणेऽङ्गान्तरव्यावृत्तस्याधिकारिविशेषणस्याभावेन तदानन्तर्यार्थत्वासंभवान्मङ्गलप्रयोजनकोऽथशब्दोऽगत्याऽऽरम्भार्थः। मङ्गलप्रत्यायकत्वं त्वथशब्दस्याथेत्यनेन मङ्गलस्याप्रतीतेरधिकाराद्यसूचनापातात् 'तस्मान्माङ्गलिकावुभौ' इति स्मृतावोकाराथशब्दयोर्मङ्गलफलकत्वोक्तेश्चायुक्तम्॥

अन्येषां भाष्ये तु 'मङ्गलस्य च वाक्यार्थे समन्वयाभावा'दित्युक्तम्। **तन्न**। अपदार्थत्वहेतौ समन्वयाभावे भामत्या 'पदार्थ एव हि वाक्यार्थे समन्वीयते। स च वाच्यो लक्ष्यो वा। न चेह मङ्गलमथशब्दस्य वाच्यं लक्ष्यं वे'त्युक्तापदार्थत्वस्य हेतुत्वेऽन्योन्याश्रयापातात्। नापि 'न तावज्जिज्ञासाया मङ्गलं कर्त्रादिभावेन वैयधिकरण्येनान्वेति। कर्त्रादिभावे मानाभावात्। कर्त्राद्यन्तरभावाच्च। नापि सामानाधिकरण्येन। जिज्ञासा मङ्गलमित्यर्थवादत्वप्रसंगादिति विवरणोक्तो हेतुः। स धूमो गिरिस्साग्निक इतिवत् 'ईक्षतेर्नाशब्द'मित्यत्र त्वत्पक्षेऽशब्दमितिवच्च मङ्गलत्वात्कर्तव्येति हेतुत्वेनान्वयोपपत्तेः॥ एतेन ब्रह्मजिज्ञासाया मङ्गलत्वं प्रसिद्धतरत्वान्नैव वक्तव्यमिति निरस्तम्, प्रसिद्धस्यैव हेतूकर्तव्यत्वात्॥

यदपि 'पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेका'दिति परेषां भाष्यम्। तस्य भामत्यनुसारेणाथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वशङ्कानिरासायानन्तर्यार्थ इव पूर्वप्रकृतापेक्षार्थत्वेऽपि जिज्ञासाहेतुभूतस्य लाभात् फलभेदाद्यर्थ आनन्तर्यार्थत्वाग्रहोऽस्माकमिति यद्यर्थः; तर्हि भाष्ये 'आनन्तर्यार्थः' इत्युक्त्ययुक्तिः। सूत्रे कल्पान्तरानुपन्यासेन पूर्वप्रकृतापेक्षार्थत्वमशक्यशङ्कञ्च। किञ्च किं नित्यः शब्दोऽथानित्य इत्यादिकल्पान्तरोपन्यासेऽपि सामानाधिकरण्यार्थमनुषक्तस्य धर्मिणोऽनित्य इत्यत्रापेक्षायामपि न साऽथशब्दार्थः। अन्यथा

उतानित्य इत्यादावुतादेरपि पूर्वप्रकृतापेक्षार्थत्वं स्यात् । नापि प्रकृतादर्थादर्थान्तरत्वाशङ्कानिरासाय, अर्थान्तरत्वं हि यतः कुतश्चित्प्रकृताच्चेद्व्यर्थं । पुष्कलकारणाच्चेदानन्तर्याभिधानं विना कारणत्वासिद्धिः । आनन्तर्याभिधाने च प्रकृतादर्थादर्थान्तरत्वस्यान्तर्णीततया सिद्धिरिति विवरणोक्तोऽभिप्रायः । आनन्तर्यानभिधानेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धेः । अन्यथा आनन्तर्यार्थत्वेऽपि तत्प्रतियोगिनो हेतुत्वासिद्धिः ॥

ननु कारणादानन्तर्यं मुख्यमव्यवधेरव्यभिचाराच्चेति तदेवाथशब्दवाच्यमिति चेन्न । अव्यवधेरकारणादानन्तर्येऽपि संभवात् । अव्यभिचारित्वं तु न मुख्यत्वे हेतुः । चैत्रो गतोऽनन्तरमेव मैत्र आगत इत्यादावमुख्यत्वाभिमानाभावात् । अनन्यथासिद्धनियतानन्तरभावित्वादिरूपे कार्यलक्षणादौ नियतपदानर्थक्यप्रसंगाच्च । कारणस्य प्रकृतत्वं मुख्यमित्यपि सुवचत्वाच्च । पूर्वप्रकृतादर्थान्तरत्वाभिधानेऽप्यानन्तर्यार्थस्यान्तर्णीततया सिद्धेश्च । तस्मादस्यैवादिसूत्रत्वेन पूर्वप्रकृतार्थसाङ्कर्यशङ्कानुदयात् 'आनन्तर्येऽधिकारस्ये'ति भाष्योदाहृतस्मृतिविरोधादधिकार्याद्यसूचनप्रसंगाच्च न प्रकृतादर्थादर्थान्तरमथशब्दस्यार्थः । एवमानन्तर्यार्थत्वे स्थिते न तावत्तदानन्तर्यमध्ययनमात्रात् । 'शान्तो दान्त' इत्यादिश्रुतिविरोधात् । नापि कर्मविचारात् । तदनन्तरं ब्रह्मजिज्ञासेत्यत्र क्रमे श्रुत्यर्थपाठनस्थानमुख्यप्रवृत्तिकनाणा तत्प्रमाणानामन्यतमस्याभावात् । विस्तृतं चैतदन्यत्र ॥

नापि परेषा भाष्योक्त् 'नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमदमादिसंपत्तिर्मुमुक्षुत्वं चे ति साधनचतुष्टयसंपद्रूपादधिकारात् । तथाहि—नित्यानित्यवस्तुविवेको नाम किं ब्रह्मैव नित्यमन्यदनित्यमिति विवेकः, किं वात्मानात्मसमुदाये नित्यत्वानित्यत्वे स्तो धर्मौ, तयोश्च धर्मिभ्या भवितव्यमिति निश्चयः । यद्वाऽनित्यस्य संसारस्य किंचिदधिष्ठानमस्तीति निश्चयो न तु ब्रह्मेति । नाद्यः । ज्ञातव्यस्य प्रागेव ज्ञाततया विचारवैफल्यात् । न च सगुणनिर्गुणविवेकाखण्डसमन्वयाद्यर्थं शास्त्रमिति युक्तम् । भामत्या नित्यानित्यशब्दयोः सत्यानृतपरत्वेनोक्तनया ब्रह्मैव सत्यमन्यदनृतमिति विवेकस्य प्रागेव

सिद्धौ तदर्थस्य सगुणनिर्गुणविवेकादेरप्यनपेक्षितत्वात् । न हि श्रुतितात्पर्यधीः स्वरूपेणापेक्षिता, किंतु ज्ञेयनिश्चायकतया । न चोक्तादन्यन्मुमुक्षुज्ञेयमस्ति । जीवब्रह्मभेदस्यापि ब्रह्मातिरिक्ततया तन्मिथ्यात्वस्य तदभेदस्यापि ब्रह्ममात्रतया तत्सत्यत्वस्यापि तेनैव निश्चितत्वाच्च । न द्वितीयः, तन्मात्रेणानात्मप्रहाणेनात्मविचारे प्रवृत्त्ययोगात् । ऐहिकामुष्मिकभोगविरागायोगाच्च । नान्त्यः । ब्रह्मशब्दार्थत्वादेः प्रकारस्याज्ञानेऽपि वस्तुतो ब्रह्मणोऽनात्माधिष्ठानस्य शास्त्रवेद्यस्य ज्ञातत्वेन शास्त्रवैयर्थ्यात् । न च विवरणरीत्या नित्यानित्यशब्दौ ध्वंसप्रतियोग्यप्रतियोगिपरौ । ततश्च ब्रह्मज्ञानफलं स्थायि कर्मादिफलं त्वस्थायीति विवेको नित्यानित्यविवेक इति युक्तम् । प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वरूपबाध्यत्ववतोऽनात्मनो ध्वंसप्रतियोगित्वायोगात् । पारमार्थिकत्वाकारेणात्यन्ताभावः स्वरूपेण तु ध्वंस इति चेन्न । पारमार्थिकत्वस्याबाध्यत्वरूपत्वेनान्योन्याश्रयात् । तथाऽत्यन्ताभावप्रतियोगित्वस्य निराकारे ब्रह्मण्यपि संभावाच्च । अतात्त्विके रूप्यादावनित्यत्वाव्यवहाराच्च । 'गौरनाद्यन्तवती एषोऽश्वत्थः सनातन' इत्यादिश्रुत्यनुसाराय मोक्षेऽप्यतात्त्विकी अनुवृत्तिर्निवृत्तिस्तु तात्त्विकी, मुक्तेर्बन्धाद्वैषम्यं तु तात्त्विकनिवृत्तिमत्तामात्रेणेत्यापाताच्च ॥

किञ्च विवेको भेदस्य तद्व्याप्तस्य वा ज्ञानं, तस्य च भ्रमत्वे ब्रह्मविचारो न नित्यफलकः स्यात् । प्रमात्वे तु भेदः सत्यस्स्यात् । तस्मात्परमते न नित्यानित्यवस्तुविवेको युक्तः । नापीहामुत्रार्थभोगविरागः । विवरणे विषयैरपि नित्यात्मस्वरूपसुखमेवाभिव्यज्यते, न तु जन्यं सुखमस्तीत्युक्तत्वेन वैषयिकसुखेऽपि विरागायोगात् । मोक्षे रागवतस्ततो भेदहीने भोगे विरागायोगाच्च । तत्त्वतस्तद्भेदहीनत्वेऽपि तदभेदहीनत्वमात्रेण विराग इति चेन्न । उभयाभावस्य व्याहतत्वात् । दृश्यते चापारमार्थिकस्यापि रूप्यस्य नेदं रूप्यमिति शुक्तिधर्मिकलौकिकपारमार्थिकभेदप्रतियोगित्वम् । शमदमादिसम्पत्तिरित्यत्र चादिशब्दो न युक्तः । तेन तितिक्षादेरेव ग्रहणं न तु विवेकादेरिति नियमहेतोस्तितिक्षानुगतस्य विवेकादिव्यावृत्तस्य चोपसंग्राहकधर्मस्याभावात् । मुमुक्षा न परपक्षे युक्ता । मोक्षस्य नित्यसिद्धात्ममात्रत्वेन

तत्रेच्छायोगात् । वृत्त्युपलक्षितस्याप्यात्मनो वृत्तौ पश्चादिव पूर्वमपि सत्त्वाच्च । किञ्च किमहं मुक्तस्स्यामितीच्छा मुमुक्षा, चिन्मात्रं मुक्तं स्यादिति वा । नाद्यः, त्वन्मतेऽहमर्थस्य मुक्त्यनन्वयात् । नान्त्यः, जातेष्ट्यधिकारिणः पितुः पुत्रस्य स्वार्थत्वात्पुत्रः पूतादिः स्यादितीच्छावत्प्रकृते चिन्मात्रस्येच्छाश्रयाहमर्थार्थत्वाभावेन तादृशेच्छाया अदर्शनेन विपरीतेच्छया एव च दर्शनेन ज्ञानस्यानिष्टफलत्वापातात् ॥

किञ्च किं भामतीरीत्या साधनचतुष्टये पूर्वपूर्वस्य उत्तरोत्तरहेतुत्वेन मुमुक्षैवाधिकारिविशेषणमन्यत्तद्धेतुभूतं, किं वा विवरणैकदेशोक्तरीत्या मुमुक्षावद्विवेकादिरप्यधिकारिविशेषणम् । आद्ये मुमुक्षानन्तर्यमेवाथशब्दार्थः स्यान्न चतुष्टयानन्तर्यम् । अन्यथा विवेकहेत्वानन्तर्यमपि तदर्थः स्यात् । अन्त्येऽपि तत्किं सामर्थ्यादेरिवान्वयव्यतिरेकाभ्यां गम्यं किं वा गृहदाहादेरिव शास्त्रात् । नाद्यः । शमाद्यभावेपि मुमुक्षामात्रेण विचारदर्शनात् । ननु स विचारः शूद्रयागवन्न फलपर्यन्तस्तत्पर्यन्तस्तु शमाद्यभावे नास्तीति चेन्न । तथापि विरागशमदमादिमुमुक्षासु सतीषु विवेकाभावेन फलपर्यन्तविचारभावादर्शनात् । नान्त्यः । श्रुत्याद्यवगतशेषत्वस्यापि मन्त्रस्य वस्तुसामर्थ्यापरपर्यायलिङ्गेनानुष्ठेयप्रकाशनद्वारैव शेषत्ववदारुण्यादेरेकहायन्यादिद्रव्यावच्छेदद्वारेणैव क्रयशेषत्ववच्च विवेकादेरपि वैराग्यादिद्वारैव विचारहेतुत्वस्य न्याय्यत्वात् । 'परीक्ष्य लोका'निति श्रुतिसिद्धत्वाच्च मुमुक्षावदधिकारिविशेषणत्वायोगात् । न हि यागे स्वर्गकामनावत्तद्धेतुभूतमप्यधिकारिविशेषणम् । अस्माकं तु मते यथाशास्त्रं विवेकादेरधिकारिविशेषणवैराग्यादिहेतुत्वं, शमादेस्तत्राधिकारिवैराग्यगम्यमिति विशेषणानां चतुष्ट्वमिति परोक्तं न युक्तम् ॥

केचित्तु नित्यानित्यवस्तुविवेकादीनि न ब्रह्ममीमांसाधिकारिविशेषणानि । तेषां तत्साध्यत्वेनान्योन्याश्रयात् । न च ब्रह्मज्ञानफलमेव नित्यमन्यदनित्यमिति विवेको वैशेषिकादिशास्त्रान्तरात् । प्रथममेवाध्ययनविधिवश्यतया पुरुषस्य शास्त्रान्तरानवकाशात् । तत्रोक्तनित्यानित्यविवेकस्य वेदान्तविरुद्धत्वाच्च । नापीतिहासपुराणादिना । विचारात्प्राक् तेन तदनि-

श्रयात् । अन्यथा ब्रह्मनिश्चयोऽपि तेनैव स्यात् । शमदमादीनि तु निदिध्यास नाङ्गानि । 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्ये वात्मनं पश्ये'दिति श्रुतावेवंविच्छब्देन शास्त्रजन्यज्ञानमनूद्य पश्येदिति निदिध्यासनाङ्गतया तेषां विधानात् । न तु विचाराङ्गानि । इहैव विचारशास्त्रे 'शमदमाद्युपेतः स्या'दित्यत्र तद्विधानादित्याहुः । तन्न । 'यस्त्वादौ श्रद्धया सिद्धं पुनर्न्यायेन साधित'मितिन्यायेन 'अनित्यत्वात्सुदुःखत्वान्न धर्मोद्या. परं सुखम् । मोक्ष एव परानन्दः' इत्यादीतिहासादिना वा 'नास्त्यकृतः कृतेने' त्यादिश्रुतितः, आपाततो वा, श्रुतिमूलहितैषिपित्रादिवाक्येन वा, श्रवणेन वा, मननात्मकविचारात्प्रागपि श्रद्धामात्रेण नित्यानित्यविवेकसिद्धेः । अन्यथा त्वन्मतेऽप्यपशूद्रमधिकारे ज्ञातेऽशूद्रस्यैतच्छास्त्रविचारे प्रवृत्तिः, प्रवृत्तौ चैतच्छास्त्रेणापशूद्रमधिकार इत्यन्योन्याश्रयः स्यात् । तथाऽध्ययन विधावप्यधीते स्वाध्याये 'अष्टवर्षं ब्राह्मण'मित्यादि वाक्येनाष्टवर्षत्वादेरधिकारिविशेषणत्वज्ञानं, तज्ज्ञाने चाध्ययने प्रवृत्तिरित्यन्योन्याश्रयः स्यात् । तथा ब्रह्मज्ञानस्यानन्तस्थिरफलत्वनिश्चये तदर्थिनो ब्रह्मविचारे निश्शङ्क प्रवृत्तिः विचारेण च तन्निश्चय इत्यन्योन्याश्रयः स्यात् । फलज्ञानं संभावनात्मकं चेद्विवेकोऽपि तथास्तु ॥

यद्यपि त्वन्मते पूर्वप्रवृत्तेन कर्मविचारेण कर्मणामल्पास्थिरफलत्वं निश्चित तथापि न तन्निश्चय एव नित्यफलर्थिनो ब्रह्मविचारे प्रवृत्तिहेतुः । भिन्न विषयत्वात् । अतिप्रसङ्गाच्च । नापि कर्मणामल्पास्थिरफलत्वनिश्चयसहितो ब्रह्मज्ञानस्यापाततोऽनन्तस्थिरफलसन्देहस्तद्धेतुः । अन्यस्यानुपायत्वनिश्चयेन ततो निवृत्तिमात्रसिद्धावपि तस्योपायत्वानिश्चये तदुपेयार्थिनस्तत्र निश्शङ्कम प्रवृत्तेः । एवंविदिति वाक्येन शमादीनां निदिध्यासनाङ्गत्वेऽपि 'प्रशान्त चित्ताय शमान्विताय – प्रोवाच तां तत्वतो ब्रह्मविद्या'मित्यादिवाक्यावगतं श्रवणाङ्गत्वं च न विरुद्धम् ॥

किञ्च 'परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दित्यादौ विवेकादीनां श्रवणाङ्गोपसत्तेः पूर्व

भावश्रुतेः कथं श्रवणानन्तरभावित्वम् । न च नित्यानित्यविवेकमात्रं विचार फलं येन तद्वैयर्थ्यं स्यात् । तस्मादथशब्दस्याधिकारानन्तर्यमेवार्थः । तदर्थत्वं च स्वमत एव युक्तं, न तु परमत इत्यभिप्रेत्याह भाष्यकरः— **अधिकारानन्तर्यार्थश्चेति ।।**

टीकायां तत्फलतयेति पाठस्साधुः, न तु तत्परतयेति । विघ्नोत्सारणासाधारणकारणरूपस्य विष्णुस्मरणादथशब्दोच्चारणदेर्मङ्गलस्याशब्दार्थत्वेन तत्परत्वायोगात् । प्रशस्तरूपमङ्गलात्मकस्य ब्रह्मणोऽथशब्दावयवाकारार्थत्वेऽपि तस्येहाप्रस्तुतत्वात् 'तस्याभिधेयमर्थमाह' इत्युत्तरग्रन्थाननुगुणत्वात् मङ्गलप्रयोजनक इति सुधाग्रन्थविरोधाच्च । 'मङ्गलोक्त्यादेः' इति टीकाया अपि विघ्ननिवर्तकशब्दोच्चारणादेरित्येवार्थः । अन्यथा 'शङ्खवीणावेणुध्वनिवत् श्रुतितो माङ्गलिकत्वा'दिति सुधाविरोधात । तत्परतयेति पाठेऽप्ययमेवार्थोऽनुसंधेयः । एवञ्चाथशब्दो मङ्गलार्थ इति भाष्यस्याथशब्दो विघ्नोत्सरणासाधारणकारणात्मकानुष्ठेयविष्णुस्मरणाथशब्दोच्चारणरूपमङ्गलप्रयोजनकः प्रशस्तरूपाननुष्ठेयरूपविष्णवभिधायकश्चेत्यर्थद्वयं द्रष्टव्यम् ॥

**द्वितीयमाक्षिपतीति ।।** अवश्यवक्तव्यार्थत्वार्थाधिक्ययोस्तदभावयोश्च लोके शब्दान्तरेषु दर्शनादथशब्दे तत्सन्देहेन प्रश्नमात्रमाद्यतृतीययोः, द्वितीये तु स्वरूपाधिक्यस्य शब्दान्तरेष्वदर्शनादथशब्दे तदाक्षेप इति भावः । कथंशब्दमाक्षेपपरतया व्याख्याय प्रश्नपरतयापि व्याचष्टे— **तृतीयेऽपि पृच्छतीति ।। इति न्याय इति ।।** सामान्यव्याप्तिरेवानुसन्धेया । यथा देवेषु चतुर्मुख इति दृष्टान्तसंभवात् । न तु यः शब्द इति विशेषव्याप्तिः । दृष्टान्ताभावादिति भावः । अत इत्यस्यातःशब्दपरत्वं हेतुपरत्वमसकृदावृत्तिं तृतीय उदाहृत इत्यनयोरावृत्ति प्राथमिकावित्यस्य वचनव्यत्ययेनानुषङ्गं चाभिप्रेत्य व्याचष्टे — **अतश्च तृतीयतयेति ।। महतश्चतुर्मुखादिति ।।** महत्तत्त्वाभिमानिनश्चतुर्मुखादित्यर्थः ।। **अयं वै लोकः प्रथमा महानाम्नीति ।।** विदा मघवन्नित्यादिका ऋक् पृथिवीलोकस्थविष्णुवाचिकेत्यर्थः । **अरुच्येति ।।**

सच्छूद्रस्य देहान्तरे वैदिकब्रह्मविद्याधिकारेऽपि नैतद्देहेऽधिकारः । देहान्तरे ऽधिकारश्च नेदानीं प्रवृत्त्युपयोगी(वृत्त्युपयोगी)त्यरुच्येत्यर्थः ॥ **अध्ययन बललब्धापीति** ॥ 'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यत' इत्यादे रित्यर्थः ॥ **अन्यायाध्ययनेति** ॥ अभक्तानधिकारिकृतत्वमन्यायत्वम् ॥ **भक्तिपूर्वकाध्ययन**(वत्त्व)**मिति** ॥ शमादिकमप्यत्र विवक्षितम् ॥ **उत्तरोक्ता प्राचुर्येणेति** ॥ पूर्वपूर्वस्मिन्निति शेषः । ततश्चायमर्थः — समानाधिकरणाना वेदाध्ययनशमादिविष्णुपादैकसंश्रयत्वादीना मध्ये यस्य शमादिविष्णुपादैक संश्रयत्वादिके अप्रचुरे, अध्ययनं तु प्रचुरं सोऽधमः । यस्य विष्णुपाद संश्रयत्वादिकमेवाप्रचुरमध्ययनशमादिके तु प्रचुरे स मध्यमः । यस्य तु विष्णुपदैकसंश्रयत्वादिकं प्रचुरमध्ययनशमादिके त्वप्रचुरे स उत्तम इति ॥

**यतो नारायणप्रसादादृते न मोक्ष इत्यादि** ॥ **ननु** प्रकृतस्य हेतुत्ववाचकेनातःशब्देन कथमिदं लभ्यम । अधिकारिविशेषणत्वेन मोक्षस्य प्रकृतत्वेऽपि तं प्रति नारायणप्रसादस्य साधनत्वादेरप्रकृतत्वेन तस्यात इत्यत्र प्रातिपदिकेन परामर्शसम्भवेन तस्य विचारकर्तव्यतायां हेतुत्वस्य विभक्त्यो-क्त्ययोगात् । **मैवम्** । यमेवैष वृणुत इत्यादिश्रुत्या प्रयोजनाभावप्रयुक्तानार-म्भणीयत्वशङ्कानिरासहेतोरन्यस्याभावात् । स्रुवेणावद्यतीत्यादौ द्रवद्रव्यमिति-वद्यत इत्यादिभाष्योक्ताध्याहारेण शब्दतः प्रकृतत्वसम्भवात् । अत एव 'यत्रानवसर' इतिश्लोके यत इत्याद्यध्याहारसमर्थनपरतयापि व्याख्येय· । यद्वा जन्मादिसूत्रे प्रामाणिकत्वाज्जगत इदंशब्देन परामर्शवदत्रापि प्रसादादेर्मोक्षहे-तुत्वादेः प्रमाणिकत्वादेतच्छब्देन परामर्श. । बुद्धिसन्निधानमेव हि प्रकृ तत्वम् । अत एव 'तमेवंविद्वा'नित्यादिना तस्य प्रामाणिकता दर्शिता भाष्ये । यद्वा एतत्सूत्रनिर्णेतव्येन 'नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादित्यादिविचारविधिवाक्येनोपस्थापितत्वाद्विचारस्य मोक्षप्रयोजनक-त्वमत शब्दार्थः । व्याख्येये प्रकृतस्य व्याख्यानेऽत इति परामर्शसभवात् । यद्वा अनुव्याख्यानोक्तरीत्या मीमासाङ्गभूतब्रह्मतर्के प्रकृतत्वात्सिद्धे व्युत्पत्त्यादि-कमिव विचारस्य मोक्षहेतुत्वमतःशब्दार्थः ॥ यद्वा जन्मादिसूत्रे ब्रह्मणो

विचारसाध्यज्ञानजन्यप्रसादद्वारा मोक्षदत्वस्य वक्ष्यमाणत्वात् 'अथैष ज्योतिरित्यादौ वक्ष्यमाणेऽप्येतच्छब्ददर्शनाद्भगवत उक्तद्वारेण मोक्षदत्वस्यातश्शब्दार्थत्वोपपत्तिः । यद्वा मुमुक्षारूपाधिकारानन्तरं विचारः कर्तव्य इत्यथब्रह्मजिज्ञासापदाभ्यामुक्ते विचारविध्यधिकारिविशेषणेच्छाविषयत्वेन लब्धं मोक्षस्य प्रयोजनत्वमत इति हेतूक्रियते । न चात्र द्वितीयपक्षेऽधिकार्यादेरप्यतश्शब्देनैव परामर्शसम्भवादथशब्दादिवैयर्थ्यम् । शमादेरधिकारिविशेषणस्य सिद्धस्य प्रवृत्त्यङ्गत्वं, प्रयोजनादेस्त्वसिद्धस्यापि बुद्धिस्थस्य, तत्रापि विषयस्य नासिद्धत्वनियमः, प्रयोजनस्य तु तन्नियम इत्यादिविशेषज्ञापनार्थं पृथक्सूचनात् । **यद्वा** उपनिषद्भाष्यादिरूपसिद्धार्थकथनात्मकोपदेशाधीनवाक्यार्थग्रहणात्मकस्य श्रवणस्य मननरूपजिज्ञासाधिकारिविशेषणत्वाच्छ्रवणविषयस्य मोक्षप्रसादादिसाध्यसाधनभावस्याथशब्दोपस्थापितत्वाद्धेतुत्वयोग्यत्वाच्चात इति परमर्श इति । अनुव्याख्याने तु—

अतो यथार्थबन्धस्य विना विष्णुप्रसादतः ।
अनिवृत्तेस्तदर्थं हि जिज्ञासात्र विधीयते ॥
प्रत्यक्षवच्च प्रामाण्य स्वत एवागमस्य हि ।
व्युत्पत्तिः प्रथमा तस्माद्वर्तमानेऽगते ततः ॥'

इत्यादिना बन्धस्य मिथ्यात्वात्तन्निवृत्तेः प्रसादनैरपेक्ष्यान्न भगवत्प्रसादार्था जिज्ञासा मुमुक्षुणा कर्तव्येत्यादिशङ्कानिरासाय प्रयोजनसाधकं जगत्सत्यत्वादिकमप्यतःशब्देनोक्तम् । विषयसिद्धिहेतुयुक्तिष्वपि स्वप्रकाशप्रत्यगर्थाभिन्नत्वान्न विषयत्वमिति प्रमेये आरोपिताकारशङ्कानिरासकृद्या ब्रह्मपदसूचिता युक्तिः तदतिरिक्ता 'शब्दस्य न प्रामाण्यं, प्रामाण्येऽपि सिद्धार्थे न प्रामाण्य'मित्यादिका प्रमाण आरोपिताकारशङ्कानिरासकृद्युक्तिरप्यतःशब्देनैव सूचिता । अपेक्षितार्थहेतुसूचकत्वादतःशब्दस्येत्युक्त्वा,

'यतोनुभवतः सर्वं सिद्धमेतदतोऽपि च'

इत्यादिना बुद्धौ विपरिवर्तमानं हि साक्षात्प्रकृतं, ग्रन्थोक्तत्वं तु तल्लिङ्गं. बन्धसत्यत्वादिकं चानुभवसिद्धत्वात्प्रकृतमिति मतान्तरमुक्त्वा,

'अतस्तदर्थं सक्षेपादत इत्यभ्यसूचयत्'

इत्यादिना मीमांसाङ्गभूतब्रह्मकर्मोख्यतर्कशास्त्रे सूत्रकृत्कृते प्रकृतो जिज्ञासाकर्तव्यत्वोपयोगी युक्तिकलापोऽत.शब्दार्थः। तर्कशास्त्रस्य मीमांसाङ्गत्वं च तन्निर्णीतस्वरूपसङ्ख्याबलाबलादिभिः प्रमाणैरिह प्रमेयशोधनादिति मतान्तरमुक्तम् ॥

तदेवं स्वर्गादिसाधने ज्योतिष्टोमादौ यथा तत्कामस्त्रैवर्णिकोऽधिकारी तथा विचारस्य सत्यपि विषये फले च मुमुक्षुः त्रैवर्णिकोऽधिकारी न तु शान्त्यादिकमपि तद्विशेषणमिति शङ्का राजसूयादौ राजत्वादिरिव वचनाच्छान्त्यादिरपि तद्विशेषणमिति सूचयताऽथशब्देन परिहृता। विषयप्रयोजनयोरभावान्निरधिकारित्वमिति शङ्का तु तत्समर्पकाभ्यामतश्शब्दब्रह्मशब्दाभ्यां निराकृता ॥

एवं सत्यपि विषये जिज्ञासा न साक्षान्मोक्षहेतुः। नापि ज्ञानद्वारा, तस्य 'कर्मणा ज्ञानमातनोती'त्यादिश्रुत्या कर्मणापि सिद्धेः। किञ्च ज्ञानमपि न साक्षान्मोक्षहेतुः। नापि भगवत्प्रसादद्वारा। तस्य 'तत्कर्म हरितोषं य'दित्यादिना कर्मणापि सिद्धेः। ज्ञानेनाज्ञाननिवृत्तौ प्रसादस्यानपेक्षितत्वाच्चेतिशङ्का अत.शब्देन प्रसादादेर्मोक्षादिहेतुत्व सूचयता परिहृता। अहमिति ब्रह्मणि ज्ञायमानेऽपि मोक्षानुपलंभान्निष्प्रयोजनत्वमिति शङ्का तु विषयसूचकेन ब्रह्मपदेनैव निरस्तेति द्रष्टव्यम् ॥

**यद्यपि** विषयादिकं समन्वयाध्यायादौ वक्ष्यते,। **तथापि** शास्त्रेण विषयादिकं निश्चित्य शास्त्रप्रवृत्त्यावन्योन्याश्रयादादौ तत्सूचनीयम्। अध्ययनविधिवाक्यवदेतत्सूत्रस्यापि शास्त्रान्तर्गतस्य शास्त्रारम्भप्रतिपादकेन स्वेनैवारम्भसिद्धेर्नानवस्था ॥ **यद्यपि** विषयादिकमागमादेवापाततः प्रतीतं; **तथापि** पूर्वपक्षोक्तन्यायेन तदभावशङ्कया न्यायेनैतत्प्रतिपादयितुं सूत्रम्। एवञ्चाथशब्दलब्धहेतुत्वस्यैवातश्शब्देनोक्त्या भास्करस्येव नास्माकं पौनरुक्त्यम्। अधिकारिविशेषणस्य शमादेर्विचारकारकत्वस्याथशब्देन लाभेऽपि सप्रयोजनत्वादेर्विचारकर्तव्यताप्रमाणस्यातश्शब्देनोक्तेः ॥

**भामत्यां तु** ब्रह्मशब्देन तत्प्रमाणं वेद उपस्थापितोऽत इति परामृश्यते। स च योग्यत्वात्तद्यथेहेत्यादिः। तथा च ब्रह्मज्ञानकर्मणोर्नित्यानित्यफलत्वप्रति

पादकादागमादिहामुत्रफलभोगविरागादि ततश्च ब्रह्मजिज्ञासा। एवञ्च नात-श्शब्देन जिज्ञासां प्रति साधनकलापस्य हेतुतोच्यते, येन पौनरुक्त्यम्। किन्तु तत्स्वरूपालाभपरिहारोऽभिधीयत इत्युक्तम्। तन्न। हेतोर्विचारकर्तव्य त्वादिरूपसाध्यान्वयत्यागेन विरागादिसाधनान्वयायोगात्। अथशब्दार्थानन्तर्यो पसर्जनस्य विरागस्यातश्शब्दोक्तहेत्वन्वयायोग्यत्वाच्च। अथशब्दोपस्थापितविरा गेणैव स्वजनकस्य तद्यथेत्यादेर्वाक्यस्य साक्षादेवोपस्थापनसंभवे ब्रह्मशब्देन परम्परयोपस्थापनोक्त्ययुक्तेश्च। विरागहेतुत्वेन त्वदभिप्रेतसत्यानृतविवेके नेह नानेत्यादेरेव हेतुतया वक्तव्यत्वेन तद्यथेत्याद्युक्त्ययुक्तेश्च॥

विवरणे तु अथशब्दगृहिताया एव साधनकलापस्य ब्रह्मविचारहेतुताया 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृत'मित्यादिनाऽपवादशङ्कायां प्राप्तायां तन्निराकरणं पुनरथशब्दोक्तहेतुत्वाभिधायिनातश्शब्देन क्रियत इत्युक्तम्। तदपि न। अथशब्दोक्तानधिकाभिधायिनाऽतश्शब्देनापवादशङ्कानिरासेऽथशब्दे-नैव तन्निरासप्रसङ्गात्। हेतुत्वसाधकहेतोः कथन एवापवादशङ्कानिरासः, न तूक्तस्यैव हेतुत्वस्य पदान्तरेण कथन इति दिक्॥

केचित्तु अथशब्दो जिज्ञासाविशेषणीभूतकालपरः। न हि ब्रह्मविचा रस्य कर्तव्यतामात्र साध्यं, किन्तु धर्मजिज्ञासानन्तर्यविशिष्टम्। अतश्शब्दस्य तु तस्मिन्विशिष्टे साध्ये कर्मणामल्पास्थिरफलत्वनिर्णयसहितो ब्रह्मज्ञानस्यानन्त स्थिरफलतापातप्रतीतिरूपो विशिष्टो हेतुरर्थः। ततश्च सार्थक पदद्वयमित्याहुः। तदपि न। अथशब्दस्योक्तप्रतीत्यानन्तर्यार्थत्वेऽकारणानन्तर्योक्तिवैयर्थ्येनाथशब्दे नैव तस्याः हेतुत्वलाभादतःशब्दवैयर्थ्यात्। अथशब्दस्यान्यानन्तर्यार्थत्वे तु नोक्तप्रतीतिहेतुत्ववाचकत्वमतश्शब्दस्य। प्रकृतस्य हेतुत्वार्थोऽतश्शब्द इत्यस्य त्वन्मतस्य भङ्गात्। किञ्च सिद्धे व्युत्पत्त्यभावाद्विचाराकर्तव्यत्वे त्वद्रीत्या पूर्व-पक्षिते ब्रह्मविचारकर्तव्यतामात्रं सिद्धान्तयितव्यम्। न तूक्तानन्तर्यविशिष्टम्। न हि सिद्धे व्युत्पत्त्यभावेऽन्यदापि विचारस्य कर्तव्यता सिध्यति। तदेवं —

अथशब्देनाधिकारमत इत्यमुना फलम्।
ब्रह्मशब्देन विषयं सूचयामास सूत्रकृत्॥

**भामत्यां** तु निश्चिते जिज्ञासायोगात्सन्दिग्धत्वेन ब्रह्मैव विषयः। ज्ञानमेवेच्छाविषयत्वेन प्रयोजनमिति जिज्ञासापदेनैव विषयप्रयोजने सूचिते इत्युक्तम्। **तन्न**। न हि पूर्वपक्षिणा ब्रह्मज्ञाने इच्छामङ्गीकृत्य तद्विचार आक्षिप्तः। किन्तु विषयाद्यभावेनेच्छैव नोदेतुं युक्तेत्याक्षिप्तम्। न च तं प्रतीच्छाया विषयादिसाधनं युक्तम्॥

**विवरणे** तु अथशब्देनाधिकारी जिज्ञासापदेनेच्छाविषयत्वेन ब्रह्मज्ञानं प्रयोजन अर्थादधिकारिविशेषणं मोक्षो ब्रह्मज्ञानफल विषयश्च सूचित इत्युक्तम्। **तदपि न**। त्वन्मते जिज्ञासापदस्य विचारलक्षकत्वेन ज्ञानेच्छापरत्वस्याभावात्। न हि विषं भुभुक्षते, कूलं पिपतिषतीत्यनेन विषभक्षणादेरिष्टत्वसिद्धिः। प्रतीतस्यापि मुख्यार्थस्य त्यक्तत्वात्। पूर्वपक्षिणेच्छानङ्गीकाराच्च। त्वन्मते ज्ञानेच्छाऽसंभवस्योक्तत्वाच्च। मुमुक्षाया अधिकारिविशेषणत्वनिरासाच्च। विषयसूचन त्वसन्दिग्धादन्यसूचनं विना न शक्यम्। अन्यथा शास्त्रारम्भसामर्थ्यादेव वा, कर्तव्यतोक्तिसामर्थ्यादेव वा तत्प्रयोजकविषयादिसूचनसंभवा जिज्ञासापदादिना तत्सूचनोक्त्ययुक्तिरिति॥

ब्रह्मशब्दश्च 'अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन्गुणा' इत्यादि श्रुतिबलाद्गुणपूर्त्यर्थः। परपक्षेऽखण्डस्य ब्रह्मपदलक्ष्यस्यैव जिज्ञास्यत्वात् श्रुति-सूत्रस्थब्रह्मपदस्यैव मुख्यार्थत्यागः॥

यच्च परैर्ब्रह्मणो जीवाद्भेदे तद्रूपविकलत्वेनाल्पत्वं स्यादिति निरङ्कुशमहत्त्वासिद्धेस्त्रिविधपरिच्छेदाभावरूपमहत्त्वार्थेन ब्रह्मपदेनैव जीवाभेदसिद्धिरित्युक्तम्। **तन्न**। तेनैव घटाद्यभेदप्रसङ्गात्। जीवस्वरूपस्य तात्त्विकत्वाद्घटादेश्चातथात्वाद्वैषम्यमिति चेन्न। देशकालयोरतात्त्विकत्वेऽपि गगनादाविव घटादौ तात्त्विकस्य वा, स्वतुल्यसद्रूपस्य वा देशाद्यपरिच्छेदस्याभावेनाल्पत्ववदभेदस्यापरिच्छेदरूपत्वे वस्तुनो घटादेरतात्त्विकत्वेऽपि ब्रह्मणि तात्त्विकस्य स्वतुल्यसद्रूपस्य वा वस्त्वपरिच्छेदस्याभावेनाल्पत्वप्रसङ्गात्। न च परिच्छेदकस्य देशादेर्घटतुल्यसद्रूपत्वाद्घटादेर्देशादितोऽल्पता, ब्रह्मणि तु परिच्छेदकस्य घटादेर्वस्तुनः स्वतुल्यसद्रूपत्वाभावात्तद्भेदाभावेऽपि न वस्तुतोऽल्पता। जीवस्य तु ब्रह्मतुल्य-

सद्रूपत्वात्तद्भेदाभावे वस्तुतोऽल्पता स्यादिति वाच्यम् । तत्वतः सद्रूपे ब्रह्मणि व्यवहारतः सद्रूपदेशादिनाऽपरिच्छेदेऽपि महत्त्वसिद्धिप्रसङ्गात् । स्वतुल्यसद्रूप घटाद्यनात्मकेऽपि गगनादावल्पत्वबुद्ध्यभावाच्च । अन्यथा कालापरिच्छिन्नेऽपि परमाण्वादौ देशपरिच्छेदेनाल्पत्वबुद्धिवदुभयापरिच्छिन्नेऽपि गगनादौ भेद मात्रेण परिच्छिन्नत्वबुद्धिः स्यात् ॥

ननु घटादौ स्वतुल्यसद्रूपदेशादिपरिच्छेदोऽल्पत्वं ब्रह्मणि घटादिप्रतियोगिको भेदरूपो वस्तुपरिच्छेदो न स्वतुल्यसद्रूप इति नाल्पत्वमिति चेन्मैवम् । तथात्वे घटादिवज्जीवादपि स्वतुल्यसद्रूपभेदाभावमात्रेण महत्वसिद्ध्या जीवाभेदासिद्धेः । गगनादौ स्वतुल्यसद्रूपदेशाद्यपरिच्छेदो महत्वम् । न च ब्रह्मणि घटादिप्रतियोगिकोऽभेदरूपोऽपरिच्छेदस्तथेति महत्वहानिप्रसङ्गाच्च । किञ्च स्वतुल्यसद्रूपस्यापरिच्छेदस्याभावे तादृशपरिच्छेदः स्यादेव । तात्विकस्यातात्विकादपि स्वतुल्यसद्रूपभेदस्य नेदं रूप्यमिति दर्शनात् । तस्माद्ब्रह्मणो जगतो व्यावृत्तिमपरिच्छिन्नतां चाभिलषता भेदस्य परिच्छेदतैव त्याज्या । परिच्छिन्नाद्भेदेऽपरिच्छेदस्यैव सिद्धेः । किञ्च निरङ्कुशमहत्वार्थं ब्रह्मणः सर्वात्मकत्वे अल्पदेशादधिकदेशेऽल्पगुणादधिकगुणे च महत्त्वबुद्धिवदेकात्मकाद्गगनादितोऽनेकात्मकराश्यादौ महत्वबुद्धिस्स्यात् । अवयवानेकत्वेऽपि परिमाणोत्कर्षादिनैव महत्वम् । निबिडानेकावयवायःपिण्डादपि विरलाल्पावयवे तूलराश्यादौ महत्वबुद्धेः । किञ्चापरिच्छेदस्य ब्रह्मानन्दत्वे बृंहतिधात्वर्थस्य भावेऽपि प्रत्ययार्थाभावेनापरिच्छिन्नत्वासिद्धिः । अन्यत्वेऽपि तात्विकत्वे सुतराम् । तद्रूपविकलत्वात् । अतात्विकत्वे तत्वतः परिच्छिन्नत्वापत्तिः । किञ्च वस्तुतोऽल्पे सत्येव तन्निरूपितमहत्वस्य वास्तवत्वमिति ब्रह्मशब्देनैव सद्वितीयत्वम् । देशाद्यपरिच्छेदेऽपि न देशादेर्वस्तुतोऽभावो हेतुः । घटादेरपि तत्प्रसङ्गात् । देशादेः सत्वेऽपि तदपरिच्छेदाभावमात्रेणापि तत्सिद्धेश्च । बौद्धाभिमतक्षणिकविज्ञानादेरपि वस्तुनः कालाद्यभावेनापरिच्छिन्नत्वप्रसङ्गाच्च । तस्मात्—

देशतः कालतश्चैव गुणतश्चापि पूर्णता ।

ब्रह्मता न तु भेदस्य राहित्यं ब्रह्मतेष्यते ॥

तदुक्तं—

'देशतः कालतश्चैव गुणतश्च त्रिधा तति'रिति ॥

तदेतदभिप्रेत्योक्तं भाष्ये 'ब्रह्मशब्दश्च विष्णावेवे'ति । त्रिविधपूर्तिवाचको हि विष्णुशब्दः ॥

अत्र परैः ब्रह्मणो जिज्ञासेति षष्ठीसमासः, न चतुर्थीसमासः। षष्ठी च कर्मणि, न तु शेषे । कर्मणि षष्ठ्या हि प्रतीत्यनुबन्धितया जिज्ञासापेक्षितकर्मणः साक्षाल्लाभः । शेषषष्ठ्या तु सामान्यद्वारेणेति कुसृष्टिः । शेषषष्ठीपक्षे तद्विजिज्ञासस्वेति साक्षाज्जिज्ञासाकर्मत्वप्रतिपादकश्रुत्यननुगमश्चेति शेषषष्ठी निराकृता । तदयुक्तम् । परपक्षे विचारजन्यज्ञानाकर्मणो ब्रह्मणो विचारकर्मत्वायोगात् । अपरोक्षवृत्तिव्याप्यस्य फलव्याप्यत्वनियमाच्च । स्वपक्षे कर्मणि षष्ठ्यामपि प्रमाणसाधनप्रयोजनादिपरिकरयुक्तस्यैव ब्रह्मणो जिज्ञासाकर्मत्वान्न प्रमाणादिविचारस्याप्रतिज्ञाततापसङ्गः । कृद्योगलक्षणा च षष्ठी समस्यत इति प्रतिप्रसवात्प्रतिपदविधाना षष्ठी न समस्यत इत्यस्य निषेधस्य नायं विषय इति ॥

युक्त्यनुसन्धानात्मको मननापरनामको विचारो जिज्ञासा । सुधायां 'जिज्ञासा नाम युक्त्यनुसन्धानात्मकविचारापरपर्यायं मनन'मित्युक्तत्वात् । न्यायनिबन्धनात्मकशास्त्रारम्भणीयत्वस्य न्यायानुसन्धानकर्तव्यतोक्तिमात्रेण सिद्धेश्च । न ह्यौपदेशिकवाक्यार्थग्रहणलक्षणश्रवणस्य कर्तव्यता उक्तरूपशास्त्रस्यारम्भणीयत्वे हेतुः । 'श्रवणजं ज्ञानं पूर्ववृत्त'मिति सुधायां मीमांसातस्तस्य पूर्ववृत्तत्वेनोक्ततया शास्त्रस्यारम्भणीयत्वं विनापि तत्कर्तव्यतासिद्धेः । 'श्रवणादिरूपा जिज्ञासा कार्ये'ति टीकायां त्वतद्गुणसंविज्ञानबहुव्रीहिणा विचार एवोक्तः । अत एव 'विचारेऽपि तत्प्रयोगा'दित्युत्तरग्रन्थः । यद्वा यथा श्रवणनिदिध्यासने विहितत्वान्मुमुक्षुणा कार्ये तथा मननमपीति दृष्टान्ततया तयोरुपादानम् । न तु शास्त्रारम्भहेतुतया । अथवा निदिध्यासनस्याकर्तव्यत्वे तदङ्गमननस्यापि तथात्वात्परम्परया निदिध्यासनकर्तव्यता आरम्भणीयत्वे हेतुः । तथा प्रति-

वाक्यार्थस्य वाक्यार्थो युक्त अन्यो वेति संशयादिनिरासकविचारशास्त्रव्युत्पाद्य न्यायावतारासन्देहकारणस्य यत्नसाध्यस्य प्रतिवाक्यमयमस्य वाक्यस्यार्थ इत्येवंरूपस्य श्रवणजज्ञानस्याभावे शास्त्रारम्भासिद्धेस्तत्कर्तव्यताप्यारम्भणीयत्वे हेतुरेवेत्यारम्भसिद्ध्यर्थमेव त्रितयकर्तव्यतोक्ता ॥

यस्तु सर्वशाखाधिकरणे टीकायां श्रवणमनने कर्तव्ये इति प्रथमसूत्रे उक्तमित्यनुवादः स तदुत्तराधिकरणे निदिध्यासनस्य विचारयिष्यमाणत्वात्तत्र-तयोरेव विचार्यत्वात्तदुपयोगित्वेनैकदेशानुवादः । न तु प्रथमसूत्रे तन्मात्रोक्त्या । अत एवोपासना नाम ब्रह्मजिज्ञासेति त्रिविधोपासनाया जिज्ञासात्वं तत्रैवोक्तम् । न चैकस्य जिज्ञासाशब्दस्य श्रवणाद्यनेकार्थत्वायोगः । इच्छार्थो जिज्ञासाशब्दो विचारलक्षक इति पक्षे दोषाभावात् । मननरूपविचाराभिधायक इति पक्षे श्रवणादौ छत्रिवल्लक्षणोपपत्तेः । यद्वेह टीकायां जिज्ञासाविचार शब्दाभ्यां साक्षात्प्रमाणद्वारा वा चित्तस्य तत्प्रावण्यरूपा श्रवणादित्रयानुगतो-पासना विवक्षिता । न तु सुधायामिव मननमिति युक्ता टीका । सुधायान्तु सति मननकर्तव्यत्वे इतराकर्तव्यत्वेन शास्त्रानारम्भाभावात् तत्कर्तव्यतैवारम्भे हेतुरिति मननमेव जिज्ञासात्वेनोक्तमिति मननविधिमूलमेवेदं सूत्रम् । समान-विषयत्वात् । न तु विवरणमत इव श्रवणविधिमूलम् । विस्तृतं चैतदन्यत्र ॥

यत्तु **पञ्चपादीविवरणयोरुक्तम्** — अवयवशक्त्या ज्ञानेच्छावाचिनो जिज्ञासाशब्दस्य विचारे लक्षणया प्रयोगप्रत्यययोरुपपत्तौ न शक्त्यन्तरकल्पनम् । अनन्यथासिद्धकार्यान्तराभावादिति जिज्ञासाशब्दो विचारे लाक्षणिको न तु रूढ इति । **तन्न** । यतः —

जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते ।
विचारं लौकिकास्तेन तत्रायं रूढ इष्यते ॥
अन्यथा मण्टपादीनां गृहादौ स्यान्न रूढता ।
गङ्गाशब्दात्तु तीरादि तद्धीपूर्वं प्रकाश्यते ॥

**तथा हि** । जिज्ञासाशब्दान्मीमांसाशब्दादिवेच्छाप्रतीत्यभावेऽपि विचारः प्रतीयते । अन्यथा बुभुत्सापदादपि विलम्बेन तद्धीसंभावान्नियमेन

विचारे जिज्ञासापदं न प्रयुज्येत । स्वीकृतश्च त्वयापि 'विचारसाध्यज्ञानेच्छा जिज्ञासाशब्दात्प्रतीयते । नोपदेशमात्रसाध्यज्ञानविषये'ति वदता विचारप्रतीतेरिच्छाप्रतीतिपूर्वकत्वाभावः । एवञ्च तद्विजिज्ञासस्वेत्यादावस्मिंश्च सूत्रे विधौ न लक्षणा । अन्यथा लोके मण्टपशब्दस्य मण्डपानकर्तृत्वरूपयौगिकार्थ संबन्धाद्गृहविशेषे, प्रवीणकुशलादिशब्दना च प्रकृष्टवीणावदादिगतप्राल्भ्यरूप गुणयोगादेव निपुणे, वाजिशब्दस्य च वाजशब्दवाच्यान्नवत्सम्बन्धादेवाश्वजातौ प्रयोगसम्भवाद्रूढिर्न स्यात् । वेदे चापरिमितं देयमित्याधानप्रकरणे श्रुतस्यापरिमितशब्दस्य परिमितान्यरूपमुख्यार्थनिष्ठानेकत्वगुणयोगादेव बहुत्ववति प्रयोग सम्भावाद्रूढिर्न स्यात । उक्ता च रूढिः षष्ठे । न च प्रवीणादिशब्द इष्टापत्तिः । यौगिकार्थप्रतीत्यभावेऽपि नैपुण्यप्रतीतेः । न चैवं वैश्वदेवेन यजेतेत्यादौ वैश्वदेवीमामिक्षामिति वाक्यविहितयागे यौगिकस्य वैश्वदेवशब्दस्य समुदाये गङ्गापदादेश्च तीरादौ लक्षणा न स्यात् । किन्तु रूढिरेव स्यादिति वाच्यम् । तत्र मुख्यार्थप्रतीतिपूर्वकमेवेतरप्रतीतेः । प्रकृते च तदभावादित्युक्तत्वात् । किञ्च त्वन्मते ज्ञानसामान्येच्छायाः क्वाप्यभावादपरोक्षेच्छायाञ्च जिज्ञासाशब्दस्यावयवशक्त्यभावात्समुदायशक्तेः कल्प्यत्वाविशेषे विचारे समुदायशक्तिरपरोक्षेच्छायां च लक्षणेत्येव किं न स्यात् ॥

एतेन जिज्ञासाशब्दवाच्ययेच्छयाऽऽक्षिप्तो विचार इह विधीयत इति विवरणाभिप्रेतं मतान्तरं निरस्तम । विचाराक्षेपस्य भामतीनिरासावसरे निराकरिष्यमाणत्वाच्च । तस्माज्जिज्ञासाशब्दो विचारे रूढ एव ॥

**केचित्तु** जिज्ञासाशब्दो रूढ्या लक्षणया वा विचारं नार्पयति । नाप्यर्थादाक्षिपति । किं त्विच्छार्थ एव । तथापीच्छायाः विषयवैलक्षण्याधीनत्वेनाविधेयत्वादिच्छा प्रति कर्मीभूतमिष्यमाणं विचारात्मक तर्करूपं ज्ञानं विधेयम् । यद्यपि जिज्ञासा कर्तव्येति प्रत्ययार्थभूतेच्छायाः कर्तव्यत्वं भाति, न तु ज्ञानस्य, तथापि स्नात्वा भुञ्जीत, प्राङमुखो भुञ्जीत इत्यत्र भुजिधातोः विधिप्रत्ययान्तत्वेन भोजनस्य कर्तव्यत्वे प्रतीतेऽपि तस्य रागतः प्राप्तत्वेनाप्राप्तयोः स्नानप्राङ्मुखत्वयोर्विधेस्तात्पर्यम् । न चैतावता भुजिधातोः स्नाने रूढिः

लक्षणा वा, आक्षेपकना वाऽस्ति । एवमिहापीच्छायाः अविधेयत्वाद्विचारात्मकं ज्ञानं विधेयम्, न तु जिज्ञासाशब्दस्य विचारे रूढ्यादिरित्याहुः । **तन्न** । स्नानादिकं हि प्राधान्येनाप्रतीतत्वाद्विधातुं युक्तम् । इह तु ज्ञानमिच्छां प्रति कर्मतया प्राधान्येन प्रतीतमिति कथं तद्विरोधिनी विधेयता । न हि स्वर्गकामपदेनेच्छाविषयतया प्रतीतः स्वर्गो विधेयः । किञ्च प्राङ्मुखो भुञ्जीतेत्यादौ विधेयप्राङ्मुखादेराश्रयमर्पयितुं भुजिधातुः सार्थकः । प्रकृते तु विधेयज्ञानं प्रतीच्छाया आश्रयत्वाद्यभावात्तद्विजिज्ञासस्वेति श्रुतौ सूत्रे च सन्प्रत्ययो व्यर्थः । किञ्च जानातेः प्रमितौ स्वारस्यात्सन्वाच्याया इच्छायाश्च प्रमितिरूपफलविषयत्वस्य स्वरसत्वान्न सन्नन्तजानातेस्तर्करूपज्ञानपरता । **किञ्च** त्वत्पक्षे विचारकर्तव्यताया मानान्तरप्राप्तत्वाच्छ्रोतव्य इत्यादिवाक्यवत्सूत्रमप्यनुवादकमेव स्यादिति कथं विधायकतोक्तिः ? कथञ्चिदप्राप्तिसंपादने तु श्रोतव्य इत्यादिरपि विधिः स्यात् । तस्माज्जिज्ञासाशब्दस्येच्छार्थत्वे विध्यसंभवात्तद्विध्यर्थं स रूढ्या विचारपरः । तदेतदाह— **न च श्रवणादेरसन्वाच्यतेति** ॥

नन्विच्छायामपि जिज्ञासापदयोगादिच्छाऽत्र जिज्ञासाशब्दार्थः किं न स्यादित्यत्राह— **इच्छाया अविधेयत्वादिति** ॥ **सुधायां** तु ज्ञानेच्छान्तर्णीतो विचारो जिज्ञासापदेन लक्ष्यत इति परमतमुक्त्वा, यदि च जिज्ञासाशब्दो मीमांसाशब्दवद्विचार एवोपसंख्यायत इति स्वमतमुक्तम् । यद्वा सुधाया पक्षद्वयेऽपि जिज्ञासाशब्दस्य विचारपरत्वाविशेषादन्यतरनिर्धारणस्याप्रयोजनत्वात्पक्षद्वयोक्तिः । तदनुसारेणात्राप्यसन्वाच्यत्वेऽपि लक्षणया विचारेऽपि तत्प्रयोगान्मुख्यार्थस्य चेच्छाया अविधेयत्वादित्यपि योज्यम् ॥

**भामत्यां** तु न जिज्ञासा नाम विचारः, इच्छाया सन्निधानात् । न च शास्त्रप्रवृत्त्यङ्गविषयप्रयोजनसूचनेन स्वार्थपरत्वोपपत्तेर्विचारे लक्षणा युक्ता । एवञ्च मुमुक्षानन्तरं ब्रह्मजिज्ञासा भवितुं युक्तेत्येव श्रौतोऽर्थः । विचारस्त्वार्थिकोऽर्थः । ज्ञातुमिच्छा हि सन्दिग्धे विषये निर्णयाय भवति । निर्णयश्च विचारसाध्य इतीच्छानिमित्तेन विचाराक्षेपात् । आर्थिके चास्मिन्नर्थे

कर्तव्यवदाध्याहारादित्युक्तम्, **तदपि न**। विचारे रूढेरुक्तत्वात्। व्याकरणस्य च साधुत्वमात्रपरत्वात्। उक्तं हि—

' यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते।
स्वरसंस्कारमात्रार्थो तत्र व्याकरणस्मृतिः ' इति ॥

भवतीत्यध्याहारस्य स्वतः सिद्धत्वेऽप्यनुवादत्वप्रसङ्गात्। तद्विजिज्ञासस्वेति श्रुत्यनुसारिणा च सूत्रेणेच्छाया अविधेयत्वेन लक्षणयापि विचारस्य विधेयत्वात्। विषयाद्यभावादिच्छाभावं वदन्तं प्रतीच्छाया विषयादिसूचनोक्तयुक्तेश्च। किञ्चैवंसति तावन्मात्रेण नैराकांक्ष्यान्नार्थिकविचारकर्तव्यतापरता युक्ता। शास्त्रारम्भवत्तस्य फलत्वेनैव सिद्धेः। कथञ्च विचारं विनेच्छाया अनुपपत्तिः, येन विचाराक्षेपकता। न हि कारणस्य कार्यं विनानुपपत्तिः। न चेच्छा विचारसामग्री। फलेच्छाया सत्यामपि साधनाननुष्ठानदर्शनात्। तस्माद्धामत्युक्तमयुक्तम्। तदेतदाह—**भवतीत्यादिकथनस्य वैयर्थ्यादित्यादिना** ॥

एतेन **कौमुद्यां** यस्मादधिकारिणां ब्रह्मज्ञानेच्छा संपन्ना तस्माद्ब्रह्मविचारः कर्तव्य इत्यवान्तरवाक्ये श्रुत्येच्छापरत्वेऽपि महावाक्ये लक्षणया विचारपर इत्युभयपरो जिज्ञासाशब्दः। अत एव विचारे लाक्षणिकोऽपि विषयादिसूचक इति यदुक्तम्, **तदपि निरस्तम्**। युगपद्वृत्तिद्वयप्रसङ्गात। उक्तरीत्या विषयफलयोरन्यथैव सूचनसंभवेन जिज्ञासाशब्दस्येच्छापरत्वे मानाभावाच्च। अध्याहारसापेक्षावान्तरवाक्यभेदादिकल्पनानुपपत्तेश्च। तस्माज्जिज्ञासाशब्दो विचारपरः, नेच्छापर इति ॥

यत्तु परैरस्य शास्त्रस्य पूर्वतन्त्रेण गतार्थत्वमाशङ्क्य तत्र कार्यनिष्ठो वेदभागो विचारितः इह तु वस्तुतत्वनिष्ठो विचार्यत इत्यगतार्थत्वमुक्तम्। **तन्न**। इहातत्वभूतोपास्यसविशेषब्रह्मविचारस्य उपासनापादे तद्विधिविचारस्य चायोगात्। न चोपासना मन्मत इव त्वन्मते मोक्षसाधनम्; येन फलसाधनादियुक्तब्रह्मविचारप्रतिज्ञानात्तद्विचारसंगच्छेत। त्वन्मते हि उपासनाया मान

सत्वेन विद्यासाम्येऽप्यनित्यफलत्वाद्धेयत्वाच्च तद्वाक्यानामतत्वावेदकत्वादुद्गीथा द्युपासनानां कर्माश्रितत्वाच्च ,समुद्रं मनसा ध्यायीते'त्यादिवाक्यविहितसमुद्र ध्यानादिवत्कर्मकाण्ड एवोपासनाया विचारो युक्तः । निर्विशेषज्ञानार्थत्वादुपास नाया इह विचारे च यागादिनित्यकर्मणामपि तदर्थत्वान्मानससङ्कल्परूपतयो पासनावद्विद्यासाम्याच्च तद्विचारोऽपीहैव स्यात् । तस्मात्सर्वस्यापि वेदस्य ब्रह्मपर त्वात् सर्वोऽपीहैव विचार्यः । कर्मदेवमीमांसयोर्वेदैकदेशावान्तरतात्पर्यविषय कर्मदेवताविचार इति ॥

यदपि परैर्ब्रह्मणो जिज्ञास्यत्वार्थमेव प्रत्यगर्थेऽहमस्मीति प्रत्यक्त्वरूपेण सामान्येन प्रतिपत्तिः । चार्वाकादीनामहमर्थे देहेन्द्रियमनश्शून्यब्रह्मत्वादि विप्रतिपत्तेः विप्रतिपत्तिश्चेत्युक्तम्; **तद्व्यधिकरणम्**—प्रत्यगर्थ एव ब्रह्मेति चेदस्तु तावत् । तथापि न तावद्बिम्बं ब्रह्म न जिज्ञासाधर्मि । प्रतिबिम्ब मात्रे विप्रतिपत्त्या बिम्बे जिज्ञासाऽदर्शनेन ब्रह्मोद्दिश्य प्रत्यगर्थाभेदादिविधानाय ब्रह्मण्येव तयोर्वक्तव्यत्वात् । नापि देहत्वादिना विप्रतिपन्नः प्रतिबिम्बः प्रत्य गर्थ एव जिज्ञासाधर्मी, प्रतीचो ब्रह्मत्वेन जिज्ञासा च ब्रह्मजिज्ञासेति युक्तम् । लोके निश्चितेन धर्मिणेवानिश्चितेन प्रकारेण विशिष्य विचारपदाप्रयोगेण सूत्रेऽश्रुतप्रत्यक्पदकल्पनापातात् । धर्मजिज्ञासेत्यादाविव श्रुतस्य ब्रह्मपदस्य कस्य कथं विचार इति प्रथमाकाङ्क्षितप्रधानधर्मिपरत्वसंभवे तत्त्यागेन तद्विपरीत प्रकारपरत्वायोगेन श्रुतहानापाताच्च । विरुद्धांशत्यागेन सुखमात्रस्येव चिन्मात्र स्यैवाभेदस्वीकारेण विशिष्टयोर्बिम्बप्रतिबिम्बयोरभेदाभावेन ब्रह्माभेदविधानाय तस्योद्देश्यत्वासंभवाच्च ॥

किञ्च धर्मिण्यतदारोपनिवृत्त्यर्थत्वाल्लक्षणस्योत्तरसूत्रे प्रत्यगर्थ एव ब्रह्मत्वेन लक्षणीयं स्यात् । न हि वस्तुतः पुरुषे इदंत्वादिना ज्ञायमाने स्थाणुत्वाद्या- रोपः करचरणादिमान् पुरुष इति पुरुषलक्षणोक्त्या निवर्तते । किन्त्वयं पुरुष इत्याद्युक्त्या । न च जिज्ञासुना प्रतीचो ब्रह्मत्वं निश्चितम्; येन ब्रह्मणि लक्षिते प्रतीचि ब्रह्मलक्षणविरोध्याकारो मिथ्येति ज्ञायेत । नापि लक्षणं प्रतीचोऽसाधारणधर्मतया तेन निश्चितम्; येन ब्रह्मणि तत्कथनमुखेन

ब्रह्माभेदो ज्ञाप्येत। स्वत्पक्षेऽपि 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते प्राणभृच्च, अधिकं तु भेदनिर्देशा'दित्यादौ जन्मादिसूत्रोक्तलक्षणस्य जीवे निषेधात्। अत एवोभयानुगतचिन्मात्र तत्त्वंपदलक्ष्ये विप्रतिपत्तिः जिज्ञासाधर्मि तु बिम्बं ब्रह्म चिन्मात्रमेवेति प्रत्युक्तम्; विशेष्यमात्रे विप्रतिपत्त्या विशिष्टधर्मिकविचारादर्शनात्। विशिष्टस्य मुमुक्षुभिरविचार्यत्वाच्च। चिन्मात्रे देहत्वादिविप्रतिपत्तेरभावाच्च। सौत्रब्रह्मशब्दस्वारस्याच्च। अथ जिज्ञासाधर्मिणि ब्रह्मण्येव प्रतीचोऽन्यन्न वेति विप्रतिपत्तेर्न वैयधिकरण्यं, तर्हि भवदीयभाष्ये इह सूत्रे प्रतीचि देहत्वादिविप्रतिपत्त्युक्ति, उत्तरसूत्रे जीवाद्भेदकस्य लक्षणोक्तिश्चायुक्ता॥

एतेन **भास्करीयं** जगत्कारणे प्रधानत्वादिविप्रतिपत्तिप्रदर्शन निरस्तम्। आद्यसूत्रे कारणपदस्य, उत्तरसूत्रे तल्लक्षणस्य च कर्तव्यत्वप्रसङ्गात्॥

किञ्च —

ज्ञातं सामान्यतोऽज्ञातं विशेषेण विचार्यते।
ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते॥

उक्तं च **अनुव्याख्याने** —

'इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजन'मिति॥

तस्माद्वेदान्तादिनाऽऽपातप्रतीते ब्रह्मणि सगुणनिर्गुणाल्पगुणत्वादिना विप्रतिपत्तेर्जिज्ञास्यत्वमिति। तदुक्तमनुव्याख्याने—

'तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम्।
वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तम'मिति॥ १॥

टीकाशेषाक्षरार्थस्तु—नामानि सर्वाणीति श्रुतावनृतस्येत्यनेन ऋतशब्दवाच्याद्विष्णोरन्यद्विवक्षितमित्याह—**विष्ण्वितरस्येति**॥ **लक्ष्म्या ब्रह्मादीनां स्वाधीनत्वोक्तेरिति**॥ अस्य सूक्तस्याम्भृणीदेवताकत्वादम्भृण्याश्च लक्ष्मी मूर्तित्वादिति भावः। **हरिवंशत्रयेति**॥ हरिवंशे भागत्रयं विवक्षितम्॥ **नटनं वञ्चनं वेति**॥ विद्यमानाकाराच्छादनेनाविद्यमानाकारान्तरप्रदर्शनं नटनम्। वञ्चनं त्वविद्यमानकथनम्॥ क्वाप्यविद्यमानं लिङ्गमूलान्वे

षणादिकं अतथ्यम् । विष्ण्वादौ विद्यमानं रुद्रादिनिष्ठतयोच्यमानं स्वातन्त्र्यादिकं वितथ्यम् । शिष्टं सुगमम् ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीमद्व्यासतीर्थमुनिविरचितायां
तात्पर्यचन्द्रिकायां जिज्ञासाधिकरणं संपूर्णम् ॥

[ जन्माद्यधिकरणम् ]

**2 – ॐ जन्माद्यस्य यतः ॐ ॥ १-१-२ ॥**

जिज्ञासाकारणीभूतगुणपूर्तिप्रसिद्धये ।
जीवादिभेदकं विष्णोर्विश्वकर्तृत्वमुच्यते ॥

पूर्वोक्तजिज्ञासाक्षेपेणेह पूर्वपक्षोत्थानात् पूर्वाधिकरणेनाक्षेपिकी संगतिः चिन्तायाः सफलत्वं च । सुधायां तु आद्यसूत्रे साधनादिसहितं ब्रह्म विचार्यमित्युक्तम् । तत्र साधनफलयोर्ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति ब्रह्मोपहितत्वेन तज्ज्ञानाधीनज्ञानत्वात् , ब्रह्मणश्च साधनादिज्ञानाधीनज्ञानत्वाभावादभ्यर्हितत्वाच्चादौ तज्जिज्ञासैव प्राप्ता । सा च लक्षणप्रमाणाभ्याम् । तत्रापि लक्षणविशिष्टे प्रमाणाकाङ्क्षेति लक्षणस्य प्राथम्यमिति प्रकारान्तरेणाधिकरणसंगतिरुक्ता ॥

अत्र 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति वाक्यस्थं ब्रह्म किं जीव उत विष्णुरिति चिन्ता । तदर्थं ब्रह्मशब्दस्य रूढ्यर्थजीवत्यागेन यौगिकार्थविष्णुग्रहणे हेतुर्नास्त्युतास्तीति । तदर्थं विध्युद्देशस्थब्रह्मशब्दस्वारस्याय 'यतो वे'त्यादिपूर्ववाक्यं किं जीवे कथंचिन्नेतुं शक्यमुताशक्यमिति ॥

**पूर्वपक्षस्तु** – जीव एवेदं ब्रह्म । 'बृहजातिजीवे'त्यभिधानाद्ब्रह्मशब्दस्य तत्र रूढेः । विष्णौ तु यौगिकत्वात् । रूढेश्चावयवार्थनिरपेक्षायास्तत्सापेक्षयोगाद्बलीयस्त्वस्य रथकारादिशब्देषु स्थितत्वात् । प्रोक्षण्यादिशब्देषु तु क्लृप्तो योगः । अक्लृप्ता रूढिः । न च जीवेऽपि योगांगीकाराद्रूढिरक्लृप्तेति वाच्यं । यौगिकार्थस्य गुणपूर्तेर्जीवेऽसंभवात् । संभवे वा जिज्ञास्यत्वेनाभि

मतस्य जीवाद्भेदासिद्धेः। गुणपूर्तितोऽन्यस्य यौगिकार्थत्वे तु जिज्ञास्यस्यापि गुणपूर्त्यसिद्धिः। न च जिज्ञास्येऽपि रूढिः। तथात्वे गुणपूर्त्यसिद्धेः। न च योगरूढिः 'बृहन्तो ह्यस्मिन् गुणा' इति श्रुत्यनुसारिक्लृप्तावयवशक्त्यैवोपपत्तौ समुदायशक्तौ मानाभावात्। 'तदेव ब्रह्म परमं कवीना'मित्यादेः केवलयोगेनाप्युपपत्तेः। न च पङ्कजादाविव योगोऽतिप्रसक्तः। येन योगरूढिः। अन्यत्र गुणपूर्तेरनंगीकारात्। अत एव टीकाया 'योगेनैवे'त्येवकारः। तथाच 'तदेव ब्रह्म परम'मित्यादौ रूढिबाधकसमुद्रशयित्वादिलिंगाद्विष्णुपरत्वेऽपि तद्विजिज्ञासस्वेत्यत्र न तत्परता। अत एव टीकाया 'यद्यपि ब्रह्मशब्दो विष्णौ प्रवर्तत' इत्युक्तम्॥

नन्वत्रापि जिज्ञास्यत्वमेव बाधकम्। न चास्यासंदिग्धजीवपरतया जिज्ञास्यत्वमेवासिद्धमिति वाच्यम्। अन्योन्याश्रयात्। न च जीवस्यापि देहादन्यतया संदिग्धत्वेन जिज्ञास्यत्वम्। टीकाया पूर्वपक्षे जीवस्याजिज्ञास्यत्वोक्तिस्तु ब्रह्मवदतिगहनत्वं नेत्यभिप्रेत्य। अत एव सुधायां पूर्वपक्षे 'देहादितो विविक्ततया न प्रसिद्ध' इति जिज्ञासाप्रयोजकमप्रसिद्धत्वमुक्तम्। ततश्च जिज्ञास्यत्वस्य जीवेऽपि संभवान्न तज्जीवपरत्वे बाधकमिति वाच्यम्। कथञ्चिज्जिज्ञासासंभवेन तदाक्षेपेण पूर्वपक्षानुदयादिति चेन्न। विशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मिकपूर्णगुणत्वप्रकारकपूर्वसूत्रोक्तजिज्ञासाक्षेपेणैव टीकाद्वयेऽपि पूर्वपक्षप्रवृत्तेः। यद्वा इह टीकायां पूर्वपक्षे पूर्वाधिकरणपूर्वपक्षापत्त्या तद्विजिज्ञासस्वेत्यस्यापि पूर्वाधिकरणपूर्वपक्षन्यायेनाजिज्ञास्यत्वेऽप्युपपत्तेरजिज्ञास्यत्वेनैव पूर्वपक्षः॥

सुधाया तु देहाद्यन्यतया जीवस्य जिज्ञासामङ्गीकृत्यापि सिद्धात्यभिप्रेतजिज्ञासाक्षिप्तेति द्रष्टव्यम्। न च जीवपरत्वे यतो वेत्यादिपूर्ववाक्योक्तकारणत्वमेव बाधकम्। विध्युद्देशगतब्रह्मपदस्वारस्याय जीवस्याप्यदृष्टद्वारा वा जगतो जीवकल्पितत्वेन वा तत्र हेतुत्वोपपत्तेः। इमानीत्यनेन जीवकर्तृककार्यजातस्यैव निर्देशोपपत्तेश्च। अत एव आत्मा द्रष्टव्य इत्यादौ जिज्ञासाविधायकवाक्ये जीवे प्रसिद्धात्मपदप्रयोगः। अत एव च जात्यादिकमिह ब्रह्म-

शब्दार्थः । ब्रह्मणो निष्क्रियत्वेन कर्तृत्वस्य, निर्विकारत्वेनोपादानत्वस्य चासंभवेन कारणत्वस्य ब्रह्मपक्ष एव बाधकत्वाच्चेति ॥

**सिद्धान्तस्तु** । विष्णुरेव जिज्ञास्यं ब्रह्म । 'य' इत्यादि भाष्योक्त श्रुतिभिः विष्ण्वेकनिष्ठस्य कारणत्वस्य जिज्ञास्ये यतो वेत्यादिना श्रवणात् । तस्य च जीवेऽनुपपत्त्या रूढेरपि बाधात् । अदृष्टद्वारा वा कल्पकत्वेन वा जीवकारणत्वे जातादिपदाना मुख्यार्थत्यागापत्तेः । 'अभिसंविशंती'ति पदोक्तमुक्तप्राप्यत्वस्य च सर्वथानुपपत्तेः । 'यत इति येनेति यदिति तद्ब्रह्मेति' च प्रतीतकारणैक्यस्य च बाधकाभावात् । इमानीति सर्वनाम्नश्च संकोचकाभावात् । जीवकर्तृतायाश्च 'इतरव्यपदेशा'दित्यादिसूत्रेषु निराकरिष्यमाणत्वात् । जिज्ञास्ये श्रुतस्य चात्मशब्दस्य 'आत्मा नारायणः पर' इत्यादि श्रुत्या द्युभ्वाद्यधिकरणन्यायेन ब्रह्मशब्दवद्विष्णुपरताया एव न्याय्यत्वात् । अन्वेषणविधिवाक्योक्तापहतपाप्मत्वादीना च जीवे शुद्धरूपाभिप्रायेण संभव शंकायामपि सत्यकामत्वादीना सर्वथानुपपत्तेः । निष्क्रियत्वश्रुतेश्च 'स हि कर्तेति सत्यकर्मेति स इदं सर्वमसृजतेति स इमान् लोकानसृजतेति नामरूपेऽव्याकरो'दित्यादिकर्तृत्वश्रुतिबलात् 'अकर्मा क्लिष्टकारित्वा'दित्यादिस्मृत्यनुसारेणाक्लिष्टकारित्वादेर्नोपपत्तेश्च । न च यत इत्यादेः कारणानुवादेन जिज्ञासाविधायकत्वादनुवादे च यथाप्राप्ति तात्पर्यान्मानान्तरेणास्मदादेर्यादृशं कारणत्वं प्राप्तम् , तत्परमेवेदं वाक्यमिति युक्तम् । अस्यानुवादकत्वेऽपि 'शास्त्रस्था वा तन्निमित्तत्वा'दिति न्यायेन भाष्योक्तश्रुतिप्राप्तकारणपरत्वात् ॥

किंच कवीना मते 'तदेव परमं ब्रह्मेत्याहु'रिति श्रुतौ विष्णौ विद्वद्रूढिरुक्ता । न हि चैत्रः परमधार्मिक इत्युक्ते धार्मिकत्वादन्येनाकारेण परमत्वं भाति । न च स्वस्यामुख्यत्वे मुख्यान्तरे वा सति स्वस्य परमत्वम् । न चैवं गुणपूर्त्यलाभः । बृहन्तो हीति श्रुत्या योगस्यापि सत्त्वात् । पङ्कजादौ रूढेरनतिप्रसंगेऽपि प्रमितत्वाद्योगवत्प्रकृते योगस्यानतिप्रसगेऽपि तदेवेति श्रुत्या रूढेरपि सत्त्वाच्च । रूढिं विना परमपदोक्तमुख्यत्वानुपपत्तेः । उपपत्तौ वा तात्रैव प्रकृतसिद्धेश्च । प्रयोगबाहुल्यरूपरूढेराहुरित्यनेनोक्तत्वाच्च ॥

ननु न प्रयोगबाहुल्यं रूढिः किंतु समुदायशक्तिः। पङ्कजादेरपि पद्मत्वजात्यंशे समुदायशक्तिरेव। प्रयोगप्राचुर्येण झडिति तेन जाति प्रतीतेरिति चेत्—तर्हीहापि भाष्ये वक्ष्यमाणश्रौतस्मार्तप्रयोगप्राचुर्येण विदुषां ब्रह्मशब्देन विष्णुव्यक्तिप्रतीतेः तत्र तस्य समुदायशक्तिरस्तु। विद्वद्रूढेश्च यवादि शब्दानां प्रियंग्वादिषु म्लेच्छप्रसिद्धितोऽपि दीर्घशूकेष्वार्यप्रसिद्धेरिव बालानां चित्र लिखितसिंहे सिंहप्रसिद्धिवद्दुर्बलातोऽविद्वद्रूढितो बलीयस्त्वात्। पिकादि शब्दानां चार्यप्रसिद्ध्यविरोध एव म्लेच्छप्रसिद्धितः कोकिलाद्यर्थत्वमुक्तं पिक नेमाधिकरणे। राजशब्दस्य पालनादिकर्तर्यार्याणा प्रयोगेऽपि 'राजा स' इत्यार्यवरपाणिनिस्मृत्यनुगृहीतत्वात् क्षत्रियजातिविषया म्लेच्छप्रसिद्धिरेव ग्राह्ये-त्युक्तमवेष्टिनये॥

न चात्राविद्वद्रूढिः स्मृत्यनुगृहीता। प्रत्युत तदेवेति श्रौतावधारण विरुद्धा। अमुख्यत्वाविशेषेऽपि गौणलक्षणावृत्योः प्राभाकरमते गौण्या मता-न्तरे लक्षणाया ज्यायस्त्ववत् लक्षणात्वाविशेषेऽपि 'प्रोद्गातॄणा'मित्यत्र बहिरङ्ग षोडशर्त्विग्लक्षणातोऽन्तरङ्गप्रस्तोत्रादिचतुष्टयलक्षणाया ज्यायस्त्ववत् लक्षणा मात्रान्निरूढलक्षणाया ज्यायस्त्ववत् मुख्यत्वाविशेषेपि योगाद्रूढेर्ज्यायस्त्ववत् गवादिशब्दानामनेकार्थेषु रूढत्वेऽपि प्रकरणोपपदाद्यभावे सास्नादिमद्व्यक्तेरेव प्रतीतिवच्च रूढित्वाविशेषेऽपि विद्वद्रूढेरेवासभाविताज्ञानमूलाया बलीयस्त्वो पपत्तेश्च। 'नारायणोऽसौ परमो विचिन्त्यः', नारायणं महाज्ञेय'मित्यादिश्रुतौ जिज्ञास्ये नारायणशब्दश्रवणाच्चेति॥

सुधाया तु'ब्रह्मशब्दः' किं प्रसिद्धजीवपर उतार्थान्तरपर इति सन्दिह्य अन्त्ये तस्यार्थस्य तद्वाचिताया: तत्र तात्पर्यस्य च कल्प्यत्वाद्गौरवम्। आद्ये तु लाघवम्। जीवस्याकल्प्यत्वात्। बृहज्जाति जीवेत्यभिधानाच्छक्तेरपि क्लृप्त त्वादबाधेन तात्पर्यस्यापि सिद्धत्वादिति पूर्वपक्षितम्। तत्रात्रैव तद्ब्रह्मेति वाक्य एव ब्रह्मशब्दस्य न विष्णुपरत्वमिति न विवक्षितम्। किन्तु सर्वत्र। अन्यथा सिद्धान्तिनं प्रत्यर्थादेः कल्प्यत्वोक्तिरयुक्ता स्यात्। तत्रत्यं 'न हि ब्रह्मशब्दो गुणपूर्तिवाचीत्येतावता सर्वत्र तत्परो भवती'तिवाक्यं तु तत्पूर्वपक्षे क्वचि

द्गुणपूर्तिवाचित्वाङ्गीकारेण न प्रवृत्तं । किन्तु ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः । किंतु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुम् । अत एवैतद्वाक्यं सन्देहावसर एव कृतम् । 'तद्ब्रह्मेत्ययं ब्रह्मशब्द' इति विशिष्य संशयधर्मिनिर्देशस्तु पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुम् । न त्वत्रैव क्वचिद्ब्रह्मशब्दस्य विष्णुवाचित्वाङ्गीकारेण पूर्वपक्ष इति दर्शयितुम । न च शक्त्यभावेऽपि लक्षणादिना तात्पर्यसम्भवात्सिद्धान्तिनं प्रति शक्तेः कल्प्यत्वोक्तिरयुक्तेति वाच्यम् । लक्ष्येऽर्थे योगासम्भवेन तदधीनगुणपूर्त्यसिद्धेः सिद्धान्तिना लक्षणादेर्वक्तुमशक्यत्वात् । न चावयवशक्तेः क्लृप्तत्वेन कल्प्यत्वोक्त्ययुक्तिः । गुणपूर्तेरेवाभावेन तत्र बृहतेः शक्त्यक्लृप्तेरिति ॥

**सिद्धान्तस्तु —**

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च (तत्सुखं स्वःप) सुखं स्वर्गपदास्पदम् '

इति श्रुतेः स्वर्गशब्दस्य चन्दनादिरूपप्रसिद्धार्थत्यागेनाप्रसिद्धार्थपरत्ववद्ब्रह्मशब्दस्यापि 'यतो वे'त्यादिवाक्यशेषात्प्रसिद्धार्थत्यागेनालौकिकार्थपरत्वोपपत्तिरिति । यद्वाऽलौकिकविशेष्यपरत्वे गौरवात्प्रसिद्धविशेष्यपरत्वे तु लाघवात्तदनुसारेण जीवेषु सम्भवद्गुणपूर्तिरेवप्रवृत्तिनिमित्तं, न तु सिद्धान्त्यभिप्रेतगुणपूर्तौ तात्पर्यमिति प्राप्ते कारणत्वेनैव बाधकेनालौकिकविशेष्यपरत्वं ततश्च सङ्कोचकाभावात्सर्वगुणपूर्तिरेव निमित्तमिति सिद्धान्त इति सुधाभिप्रायः । अत एव न्यायविवरणे अत्रोक्तं सुधोक्तं चाधिकरणशरीरमभिप्रेत्य 'न जीव एवायं ब्रह्मशब्दः । यतो वा इमानि भूतानि जायन्त इत्यादिना जन्मादिकारणत्वस्यैव ब्रह्मलक्षणत्वोक्ते'रित्युक्तम् ॥

**अनुव्याख्याने** तु मोक्षदत्वाद्ब्रह्म जिज्ञास्यमित्युक्तं प्रथमसूत्रे । तत्कथमिति शङ्कायामनेन सूत्रेण तदुपपाद्यत इत्युक्तम् । तत्रायं भावः । मोचकत्वेन विष्णुर्जिज्ञास्यश्चेद्बन्धकत्वेनाजिज्ञास्योऽपि स्यात् । न चायं न बन्धकः । जीवस्याबद्धत्वस्वबद्धत्वयोरयोगेनान्यबद्धत्वे वाच्ये अन्यस्य चेतनस्याचेतनस्य

चेश्वराधीनत्वे पुनरीश्वरस्य बन्धकत्वेनाजिज्ञास्यता। अनधीनत्वे स्वानधीन कृताद्बन्धान्मोचकत्वं नेश्वरस्येति न जिज्ञास्यत्वमिति प्राप्ते अप्रसन्नस्य बन्धकत्वं प्रसादहेतोर्जिज्ञासाया: कर्तव्यत्वानुकूलमेव न तु प्रतिकूलम्। सूत्रे सृष्ट्यादिहेतुत्वोक्तिस्तु मोचकत्वसंभावनार्थेति सिद्धान्त इति ॥

अत्र परैर्न तावदुपलभ्यमानं जगदेव ब्रह्मलक्षणम्। तस्यानित्याशुद्ध परिच्छिन्नादिरूपस्य तद्विरुद्धब्रह्मलक्षणत्वानुपपत्तेः। नापि नित्वत्वकारणत्वादि ब्रह्मधर्म:। तस्यानुपलब्धेरिति प्राप्ते मा भूदनुभूयमानं जगत्तद्धर्मतया तदात्म तया वा लक्षणम्। तदुत्पत्त्यादि तु भविष्यति। देशान्तरप्राप्तिरिव सवितु र्व्रज्याया इति सिद्धान्तितम्। तन्न। जिज्ञास्यस्येतरव्यावृत्त्यर्थं लक्षण सूत्रेऽस्मद्रीत्याऽन्याव्यावृत्तिपूर्वपक्षस्यैवोचितत्वात्। अनित्यादिरूपस्य शब्दादे र्नित्यादिरूपाकाशादिलक्षणत्वदर्शनाच्च। जगत इव कारणत्वस्याप्यनात्मतया ऽऽत्मविरुद्धस्वभावत्वाच्च। जिज्ञास्यत्वेनाद्यसूत्रे प्रकृतस्य निर्विशेषब्रह्मणो भ्रमाधिष्ठानत्वेनाकारणत्वाच्च। अधिष्ठानत्वस्यैव विवक्षाया तु श्रुतिसूत्रयोर्जन्मो त्त्ययोगात्। देशान्तरप्राप्तेः सूर्यगत्यनुमापकत्वेऽपि तल्लक्षणत्वाभावाच्च। न चात्र सूत्रे यतो वेत्यादिश्रुतौ वा उत्पत्त्यादिकमद्वितीये ब्रह्मणि लिङ्गत्वे-नोच्यत इति त्वयापि स्वीकृतम ॥

केचित्तु न तावज्जन्मादयो विशेषणत्वेन लक्षयन्ति। विशेषणस्य स्वाश्रये सर्वविशेषधर्मव्यावर्तकत्वेनैकस्मिन्ननेकविशेषणयोगेनानेकविशेषणा श्रयस्य ब्रह्मणोऽनेकत्वप्रसङ्गात्। चैत्रः श्यामो युवा लोहिताक्ष इत्यादौ तु मानान्तरवशादैक्यम। न चात्रापि ब्रह्मशब्दैक्यात् ब्रह्मैक्यम। खण्डो मुण्डः पूर्णशृङ्गो गौरित्युक्ते अज्ञातगोव्यक्तेः पुंसो गोव्यक्तिबहुत्वस्येवात्रापि ब्रह्म व्यक्तिबहुत्वप्रतीतिप्रसङ्गात्। नाप्युपलक्षणतया। उपलक्ष्याकारान्तराप्रतीतेः। तास्मज्जन्मादिवाक्यं न ब्रह्म लक्षयितुं शक्तमिति प्राप्ते। अस्तु तावद्विशेषण त्वम्। न च ब्रह्मणोऽनेकत्वप्रसङ्गः। विशेषणाना स्वविरोधिधर्मव्यावर्त कत्वात्। जन्मादीनां तु कालभेदेनाविरोधात्। उपलक्षत्वं वास्तु। बृहत्यर्थस्य पूर्णत्वस्योपलक्ष्यत्वादिति सिद्धान्तयन्ति। तन्न। पूर्वपक्षानौ

चित्यस्योक्तत्वात् । किंच जन्मादय इत्यत्र जन्मादिशब्देन कार्यावस्थागतोत्पत्त्यादिविवक्षाया तद्भेदेन तदनाश्रयब्रह्मभेदाशङ्का सूत्रे यत इति पदं चायुक्तम् । न हि यतश्चैत्रजन्म स मैत्र इत्युक्ते चैत्रनिष्ठजन्म मैत्रलक्षणं भवति । किन्तु मैत्रगतं कारणत्वम् । कारणगताना 'यतो येने'ति श्रौतपञ्चम्याद्युक्तानां जन्मादिकारणत्वानां विवक्षायामपि त्वन्मते सृष्ट्यादिकारणत्वानामेकस्मिन्नेवोपादाने दर्शनान्न भेदाशङ्का युक्ता । सिद्धान्ते कालभेदेनाविरोधोक्तिश्चायुक्ता । लयादिकाले 'सर्गाद्या भावशक्तय' इत्यादिस्मृतिसिद्धायाः सामर्थ्यरूपायाः सृष्ट्यादिकारणतायाः सत्त्वात् ॥

यादवप्रकाशीये तु 'तद्विजिज्ञासस्वे'ति वाक्ये साङ्ख्याभिमतप्रधानस्यापि ब्रह्मशब्दार्थत्वाज्जिज्ञास्यत्वमिति शङ्कानिरासाय जन्मादिसूत्रमित्युक्तम् । तत्र न तावत्प्रधानस्यैव जिज्ञास्यत्वशङ्कानिरासकं सूत्रम् । जीवस्यापि ब्रह्मशब्दार्थत्वेन जिज्ञास्यत्वशङ्कायाः कारणत्वाभावेन तन्निरासस्य च संभवात् । जीवप्रधानादीनां जिज्ञास्यत्वशङ्कानिरासार्थत्वं तु सूत्रस्यास्माकमिष्टम् ॥

यच्चोक्तं परैर्जन्मादीत्यत्रोत्पत्तिस्थितिभङ्गमेवोच्यते न त्वन्यत् । यतो वेत्यादिश्रुत्यनुसारादिति । तन्न । 'यतो वे'त्यत्र चतुर्णां 'तमेवैकं जानथे'त्यादौ 'यस्मिन्द्यौ'रिति स्थित्यादिनामेकैकस्यैव श्रवणात् । न चाभिसंविशन्तीत्येतत्प्रलयपरम् । प्रयन्तीत्यनेन पौनरुक्त्यापत्त्या तस्य मोक्षपरत्वात् । न च प्रयन्तीत्यनेन सुषुप्तौ ब्रह्मप्राप्तिरुच्यते । तथापि चतुष्ट्वापरिहारात् । जगतो जन्माङ्गीकारेऽनित्यत्वापत्त्या मिथ्यात्वासिद्धेरुक्तत्वाच्च । तस्मात्सृष्ट्याद्यष्टकमेव जन्मादिपदार्थः । 'यतो वे'त्यत्र सृष्टिस्थितिप्रलयमोक्षाणा 'य आत्मानमन्तरो यमयति, त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्यादौ नियमनादीनामप्युक्तेः । सूत्रकृतैव स्कान्देऽष्टकर्तृत्वस्य लक्षणत्वेनोक्तेश्च । न च नियत्यादीना जन्मादावन्तर्भावः । स्वस्वव्यापारेषु प्रवृत्त्यादिरूपाणा नियत्यादीनां विनाशादेरिव जन्मादिमत्त्वेऽपि जन्मादिभ्यो भेदानुभवात् । मोक्षस्य बन्धध्वंसत्वे चोत्पत्तिरपि प्रागभावनिवृत्तिः स्यात् ॥

ननूत्पत्तिः प्रागभावस्य ध्वंसो न तूत्पद्यमानस्येति चेत्तर्हि मोक्षोऽपि बन्धस्य ध्वंसो न तु बद्धस्य। मोक्षस्य परमपुरुषार्थतया पृथग्वाच्यत्वाच्च। अज्ञानं तु न बन्धः। किंतु बन्धकम्। ननु तथापि नियमनज्ञानादीनस्येत्यनेन विवक्षित्वा तेषामुत्पत्त्यादिके जन्मादिपदेनोक्ते नियमनादीन्प्रति जगत्प्रतीव ब्रह्म कारणं सिद्ध्यति। कि जन्मादीत्यत्र तद्ग्रहणेनेति चेन्न। अस्येतनेन निर्दिष्टधर्मिभूतजगत्सबन्धार्थ धर्माणा नियमनादीनां धर्मनिर्देशकेन जन्मादिपदेनैव ग्राह्यत्वात्। न चे परमतेऽस्येत्यनेन भङ्गं विवक्षित्वा तस्योत्पत्त्यादिके जन्मादिपदेनोक्ते भङ्गस्य ब्रह्म कारणं सिध्यति। कि जन्मादीत्यत्र भङ्गग्रहणेनेति स्यात्। नन्वेवमपि चेतनादिसंबन्धिज्ञानादेर्ब्रह्मकार्यत्वे सिद्धेऽपि ज्ञानादिसबन्धिनियमादेर्ब्रह्मकारणं न सिध्यतीति चेन्न। यो यस्य धर्मः स तदाश्रित इत्युक्ते धर्मित्वे सति धर्मस्य रूपादेर्यथा धर्मत्वेन य इत्यनेन धर्मितया यस्येत्यनेन च ग्रहणं, तथा ज्ञानादीनामष्टकान्तर्गतत्वाज्जन्मादीत्यनेन गृहीतानामपि नियम्यत्वादिना रूपेणास्येत्यनेनापि ग्रहणात्। अन्यथा तवापि भङ्गसंबन्धिजन्मादिकारणं ब्रह्म न सिध्येत्। नित्यकर्मणि यस्य पुंसो यावदङ्गोपसंहारे शक्तिस्तत्प्रयोगे तावदङ्गोपेततेव ब्रह्मण्यपि यस्य वस्तुनः सृष्ट्याद्यष्टके यावत्संभवति तावद्धेतुताऽनुगतैव॥

यद्यपि चेतनस्थानि सुखदुःखादीन्यचेतनस्थानि वृद्ध्यादीन्यपि सन्ति, **तथापि** विचारविधायकनानावाक्यपरामर्शेन स्कान्दे सूत्रकृतैवाष्टककर्तृत्वस्यैव लक्षणत्वेनोक्तत्वादत्रापि तस्यैव विवक्षणीयत्वान्न दोषः। यद्वा सर्वैर्मुमुक्षुभिर्विशिष्याष्टककर्तृत्वस्यैवान्यकर्तृत्वस्य ज्ञेयत्वनियमाभावान्नान्यदिहादिशब्दार्थः। उक्तं च —

'सृष्टिरक्षाहृतिज्ञाननियमाज्ञानबन्धनान्।
मोक्षं च विष्णुतश्चैव ज्ञात्वा मुक्तिर्न चान्यथा'

इति। अथवा विश्वोपादकगुणपूर्तिप्रसिद्धये जीवाद्भेदके प्रसिद्धे जन्मादित्रितयहेतुत्वेऽभिहितेऽपि प्रयोजनसिद्धये मोक्षदत्वस्यापि वक्तव्यत्वात्तस्य च बन्धकत्वं विनाऽयोगात्तयोश्च तद्धेतुज्ञानाज्ञानदत्वं विनाऽनुपपत्तेस्त्रितयहेतुत्व

स्यापि वक्तव्यत्वात् पुनश्च दीपस्तम इव ज्ञानं बन्धकाज्ञानं स्वभावादेव हन्ति किमीश्वरेणेति शङ्कायां दीपज्ञानादिस्वभावोऽपि भगवन्नियत इति वाच्यत्वात्प्रकृतोपयोगितयाऽष्टकोक्तिः। यथा च स्रष्टृत्वादावेकैकस्यैव लक्षणत्वोपपत्तावपि त्रितयोक्तिः स्थितिहेतुरन्य इति शङ्कानिरासार्थं वाऽनेकलक्षणसूचनार्थं वा तथाऽष्टकोक्तिरपि तदर्थमस्तु। न चोपादानत्वाय त्रितयोक्तिः। मृष्टिलयाभ्यामेव तत्सिद्धेः। संभवति च गुणपूर्तावनेकोपपादकोपन्यासः। तस्मादष्टकमेव जन्मादिशब्दार्थः॥

केचित्तु यतो वेत्यादिश्रुतौ प्रतिवाक्यं तद्ब्रह्मेत्यनुक्तेरनेकलक्षणवैयर्थ्याच्च जन्मादिहेतुत्वसमुदाय एकं लक्षणम्। अत एव सूत्रे जन्मादीत्येकवचनमित्याहुः। तन्न। व्यावर्त्याभावात्। न हि सर्वजगज्जन्मकारणं स्थित्याद्यकारणं च किंचिदस्ति। ननु जन्मादिहेतुत्वं निरतिशयबृहत्त्वस्योपलक्षकम्। न च तदुपलक्षणमेकेनैव युक्तम्। जन्ममात्रोक्तौ स्थित्याद्युपयोगिज्ञानाद्यभावेन निरतिशयबृहत्त्वासिद्धेः। अतः समुदायोक्तिरिति चेन्न। त्रितयोक्तावपि मोचकत्वोपयोगिशक्त्याद्यलाभात्। उपलक्षणस्योपलक्ष्योपपादकत्वानियमाच्च। उक्तशंकानिरासार्थमेवानेकलक्षणोक्तिसंभवाच्च। प्रतिवाक्यं तद्ब्रह्मेत्यनुक्तिस्तु ब्रह्मव्यक्तिभेदशंकानिरासार्थमिति त्वयापि स्वीकृतम्। अन्यथा सत्यज्ञानादिवाक्येऽपि प्रतिपदं ब्रह्मपदाश्रवणान्निरुपाधिकसत्तायोगित्वनित्यासंकुचितज्ञानत्वाऽपरिच्छिन्नगुणत्वरूपाणां सत्यत्वज्ञानत्वानन्तत्वात्मकानां स्वरूपलक्षणानामपि प्रत्येकं लक्षणत्वं न स्यात्। सौत्रैकवचनादपि न समुदायस्य लक्षणता। यत्र साक्षादयः सार्गीः 'हलोऽनन्तराः संयोग' इत्यादौ बहुवचनेऽपि समुदाये लक्षणत्वसंयोगसंज्ञादेः, यस्य छत्रादिकं स राजा, 'अजाद्यतष्टाप्' इत्यादावेकवचनत्वेऽपि प्रत्येकं लक्षणत्वादेर्दर्शनाच्च। गर्गाः शतं दण्ड्यन्तामित्यादौ समुदाय इव विप्रा भोज्यन्तामित्यादौ प्रत्येकमपि वाक्यसमाप्तेर्दर्शनाच्च। तस्माज्जन्मादिहेतुत्वं प्रत्येकं लक्षणमिति॥

यच्चोक्तं परैर्जन्मादिकारणत्वं तटस्थलक्षणम्। आनन्दादिरेव स्वरूपलक्षणमिति। तत्र न तावल्लक्ष्यगतागते स्वरूपतटस्थलक्षणे इति युक्तम्।

काकादेर्गृहे कारणत्वस्य च ब्रह्मणि अध्यासतटस्थलक्षणस्य कारणत्रितय-जन्यत्वस्य चाध्यासे सत्त्वेन स्वरूपलक्षणत्वापातात् । आनन्दादेः स्वरूपलक्षणत्वाभावप्रसंगाच्च । एतेन सत्यासत्ये स्वरूपतटस्थलक्षणे इति निरस्तम् । काकादेरध्यासतटस्थलक्षणस्य च गृहाद्यवकल्पितत्वात् । ननु कारणताऽपि विशिष्टे, न तु शुद्ध इति चेन्न । शुद्धेऽप्यतोऽसंभवादिप्रसंगेन तल्लक्षणत्वायोगात् । न च लक्षणत्वस्यैवाभावे तद्विशेषनटस्थलक्षणत्वं युक्तम् । शाखाग्रस्थूलतारादिकं तु न चन्द्रास्यन्यत्यादिलक्षणत्वेनोच्यते । किंतु चन्द्रादिव्यक्तिं प्रदर्श्य स चन्द्र इत्यादिकं वक्तुम् । प्रकृते तु न तथा । शब्दैकगम्यशुद्धरूपस्य मानान्तरायोग्यत्वात् । न च यतो वेत्यादिवाक्यमेवाभिधया कारणत्वमुपस्थाप्य पुनस्तन्मुखेन लक्षणया कारणत्वरहितमानन्दैकरसं शुद्धं बोधयतीति युक्तम् । सकृत्प्रयुक्ते वृत्तिद्वयायोगात् । केवललक्षणयैव शुद्धबोधन संभवेनाभिधया कारणत्वोपस्थापनवैयर्थ्याच्च ॥

एतेन यत इत्यनेनैव पदेन शुद्धप्रतीतिरिरिति निरस्तम् । शुद्ध रूपस्य तेनैव सिद्धत्वेन शेषवैयर्थ्यात् । सत्यज्ञानादिवाक्यान्तरेण शुद्धसिद्धौ तु कारणवाक्यवैयर्थ्यम् । न हि प्रकृष्टप्रकाशश्चन्द्र इत्युक्त्वा शाखाग्रमपि दर्शयन्ति । न वा प्रकृष्टप्रकाशत्वादिज्ञानानुपायमन्यदेवोक्त्वा प्रकृष्टप्रताशश्चन्द्र इति वदन्ति । न च जगत्कारणं ब्रह्मेत्यनुक्त्वाऽऽनन्दो ब्रह्मेति वक्तुमशक्यम् ॥

नापि यावत्स्वप्रत्याय्यव्यावृत्तिभाव्यभाविनी स्वरूपतटस्थलक्षणे । त्वन्मते यावद्व्यावृत्तिभाविव्यावर्तकान्तराभावेनास्यैव यावद्व्यावृत्तिभावित्वावश्यंभावात् । अध्यासतटस्थलक्षणेऽतिव्याप्तेश्च । अत एव न यावल्लक्ष्यभाव्यभाविनी स्वरूपतटस्थलक्षणे । अलक्ष्यव्यावर्तकस्याभावे लक्ष्यस्यानवस्थानाच्च । न ह्यक्षीराद्यावर्तकहीनं क्षीरम् । न वाऽक्षीरदशायामसन्माधुर्यविशेषो न क्षीरस्य स्वरूपलक्षणम् । 'ईशानः प्रभुरव्ययः । अद्वैतः सर्वभावाना देवस्तुर्यो विभुः स्मृतः । तुरीयं तत्सर्वदृक् सदे'त्यादिश्रुत्या कारणत्वादेरपि यावल्लक्ष्यभावित्वाच्च ॥

नापि लक्ष्यान्तर्गतानन्तर्गते स्वरूपतटस्थे। अन्तर्गतपदेन लक्ष्यैकदेशोक्तौ लक्ष्यस्याखण्डत्वहानेः। अभेदोक्तौ तु प्रकृष्टप्रकाशत्वादेश्चन्द्रस्वरूपलक्षणत्वेन स्वीकृतस्यापि तन्न स्यात्। त्वया लक्षणवाक्यस्याखण्डार्थत्वाय प्रकृष्टत्वादेश्चन्द्रप्रातिपदिकार्थाद्बहिर्भावस्योक्तत्वात्। प्रसिद्धस्यासाधारणधर्मस्य लक्षणत्वेनाप्रसिद्धस्य धर्मिणश्च लक्ष्यतया लक्षणस्य लक्ष्यमात्रत्वानुपपत्तेश्च। कारणत्वे लक्ष्यमात्रत्वरूपस्वरूपलक्षणत्वस्य ममाप्यनभिलषितत्वाच्च। आनन्दत्वादेरपि धर्मत्वाच्च। आनन्दो लक्षणमिति चेत्तर्हि जगत्कारणं लक्षणमस्तु। कारणस्य सोपाधिकत्वेन निरुपाधिकस्वरूपत्वाभावे आनन्दस्यापि तन्न स्यात्। त्वन्मते शुद्धे आनन्दत्वजातेरभावेनानुकूलवेदनरूपस्य वा परमप्रेमास्पदस्य वा दुःखविरोधोपलक्षितस्वरूपस्य वा तस्य सोपाधिकत्वात्। एवं ज्ञानमप्यर्थप्रकाशात्मकत्वेन सोपाधिकमेव। भोजनस्य भोक्तृभोज्यसापेक्षत्ववज्ज्ञानस्य ज्ञातृज्ञेयसापेक्षत्वात ॥

एतेन यदुक्तं विवरणे विषयानवच्छिन्नमादित्यादिप्रकाशवदर्थप्रकाशनसमर्थं ज्ञानं स्वरूपलक्षणमिति तन्निरस्तम्। सामर्थ्यस्य शक्तिरूपत्वात्। विषयनिरूप्यत्वाच्च। जगज्जननादिसामर्थ्यस्यैव स्वरूपलक्षणत्वोपपत्तेश्च। स्वरूपप्रकाशत्वं नान्योपाधिकमिति चेन्न। स्वरूपस्य स्वावेद्यत्वात्। (स्व) व्यवहारयोग्यतायाश्च व्यवहारोपाधिकत्वात् ॥

एतेन निरुपाधिकसोपाधिके स्वरूपतटस्थे इति निरस्तम्। प्रकृष्टप्रकाशत्वादेर्निकृष्टादिनिरूप्यतया मिथ्यार्थावभासत्वस्यापि मिथ्यार्थनिरूप्यतया तयोश्चन्द्राध्यासस्वरूपलक्षणत्वाभावापाताच्च ॥

एतेन स्वयं व्यावर्तकं स्वरूपलक्षणम्। व्यावर्तकोपस्थापकं तु तटस्थम्। काकादिर्हि व्यावर्तकं सत्स्थानाद्युपस्थापयतीति निरस्तम्। त्वन्मते कारणत्वेनोपस्थाप्यव्यावर्तकान्तराभावात्। स्वरूपमात्रस्य च जिज्ञासाधर्मित्वेन प्रागेवोपस्थितेः। एतेनैव कार्यान्वयिरूपं विशेषणं स्वरूपलक्षणम्। तदनन्वयिरूपोपलक्षणं तटस्थम्। आनन्दत्वादिकं हि तद्विजिज्ञासस्वेति वाक्यविहितजिज्ञासारूपकार्यान्वयि। तस्य मुमुक्षुज्ञेयत्वात्। न तु कारणतेति निरस्तम्।

इतरव्यावृत्त्यर्थमानन्दत्वादेरिव कारणत्वस्यापि जिज्ञास्यत्वात । अन्यथा समन्वयाविरोधाध्याययोस्तद्व्युत्पादनं न स्यात् । न च ब्रह्मण्यानन्दत्वादेः कारणत्वादेश्चारोपितत्वेऽविशिष्टेऽपि दुःखव्यावृत्तिरेव ज्ञेया. न त्वकारणव्यावृत्तिरित्यत्र हेतुरस्ति । सुखस्वभावत्वादसुखव्यावृत्तौ कारणस्वभावत्वादकारणव्यावृत्तिरस्तु । 'देवस्यैष स्वभावोऽय' मित्यादिश्रुतेः । किंच जन्महेतुत्वेनैवोपलक्षणेनोपलक्ष्यज्ञानसिद्धेः स्थितिहेतुत्वाद्युपलक्षणान्तरवैयर्थ्यम् । अस्मन्मते तु जन्महेतुत्ववत्स्थितिहेतुत्वमपि मुमुक्षुणा ज्ञेयम् । न त्वन्यज्ञानोपक्षीणम् । तस्माद्ब्रह्मशब्दार्थगुणपूर्तिरूपस्वरूपलक्षणोपपादकं —

'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥'

इत्यादिवचनसिद्धं 'यतो येने'त्यादिकारकशक्तिवाचिपञ्चम्याद्युक्तजगज्जन्मादिसामर्थ्यमपि परमानन्दादिवद्यावल्लक्ष्यभाविरूपस्वरूपलक्षणमेव । वह्नेर्दाहशक्तिवत् । 'एष नित्यो महिमा, स्वाभाविकी ज्ञानबलक्रिया चे'त्यादिश्रुतेः । किंच —

असाधारणधर्मो हि लक्षणं परिकीर्त्यते ।
तच्च निर्धर्मकब्रह्मवादिना युज्यते कथम् ॥ १ ॥
किंच, स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम् ।
सजातीयाद्विजातीयाच्चाद्वैतिमते कथम् ॥ २ ॥
न च मिथ्याभेदसिद्ध्यै मिथ्यालक्षणकीर्तनम् ।
मुमुक्षुं तत्वजिज्ञासुं प्रति शास्त्रेषु शोभते ॥ ३ ॥

न च कारणत्वे श्रुतेरतात्पर्यान्नाप्रामाण्यम् । तात्पर्यनिर्णायकैः सूत्रैः प्रत्यधिकरणं सदेवेत्यादि वाक्यं न प्रधानादिकारणत्वपरं किंतु ब्रह्मकारणत्वपरमित्युक्तेरिति ॥

केचित्तु यतो वेत्यादिवाक्येन प्रतिपन्नजन्मादिकारणत्वस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपं सत्यज्ञानादिवाक्येनाभिधीयते । न च कारणत्वेनैवलक्षणेन स्वेतरसर्वव्यावृत्तिसिद्धेः किं सत्यादिवाक्येनेति शङ्क्यम् ; यथा हि घटस्य

संस्थानविशेषादिना स्वेतरसर्वव्यावृत्तत्वेऽपि गन्धवत्त्वात्पृथिवीजातीयत्वम् , एव ब्रह्मणो जगत्कारणत्वेन स्वेतरव्यावृत्तत्वेऽपि जीवजडजातीयत्वमिति शङ्कायां यथाऽबादेर्गन्धाभावादपृथिवीत्वम् , तथा ब्रह्मणोऽपि सोपाधिकसत्त्वादेरभावान्न जीवजडजातीयत्वमिति दर्शयितुं निरुपाधिकसत्यत्वादिलक्षणोक्तेरित्याहुः । **तन्न** । संस्थानविशेषो हि घटं पटादिभ्य एव व्यावर्तयति , न तु पृथिवीमात्रात् । घटस्यापि पृथिवीत्वात् । एवं च संस्थानादिकं येभ्यः पटादिभ्यो व्यावर्तयति तद्विजातीयत्वमपि तेनैव सिद्धम् । अबादेरपि पृथिवीमात्रव्यावर्तकद्रवादियोगादेव हि पृथिवीवैजात्यम् । यस्मात्तु पृथिवीजातीयात्संस्थानादिना वैजात्यं न सिध्यति तस्माद्व्यावर्तकत्वमपि संस्थानादेर्नास्ति । प्रकृते तु कारणत्वं जीवादिभ्यो ब्रह्म व्यावर्तयतीति कथं तेनाकारणेभ्यो जीवादिभ्यो वैजात्यं तदन्तर्भावायोग्यत्वादिरूपं न सिद्ध्येत् ? तदनिष्ठजातियोगित्वं तु सत्यज्ञानत्वादिना लक्षणान्तरेणापि न सिध्यति । कारणत्ववन्निरुपाधिकसत्यत्वादेरप्यजातिरूपत्वात् । तस्मात्सत्यज्ञानत्वादिवत्कारणत्वमपि स्वेतरसर्वव्यावर्तकमिति । तदेतदभिप्रेत्योक्तमनुव्याख्याने —

‘अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम् ।
कृष्णव्यानच्छलेनैव स्वयं भागवतेऽब्रवीत् ॥’ इति ॥

टीकाक्षरार्थस्तु — भेदकाभावेन जिज्ञास्यता न सभवतीत्यत्रत्यस्येति शब्दस्येतिश्रुत्यादिसंगतिरिति पूर्वेणान्वयः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ **पर्यवर्तयदिति** ॥ विपरिवर्तन इति धातोरिति भावः ॥ **पञ्चाशन्मरुत इति** ॥ एकोनपञ्चाशन्मरुता मुख्यवायुना सह पञ्चाशत्वादिति भाव· ॥ **एकादशादित्या इति** ॥ आदित्याना द्वादशत्वेऽपि विष्णुव्यतिरिक्ताना नियम्यानामेकादशत्वादियमुक्तिः ॥

**तत्त्वप्रदीपे तु** —

‘आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
बृहस्पतिश्च कामश्च (मनु)मुनिर्दक्षो विनायकः ॥
भृगुश्चैवानिरुद्धश्च धर्मो निर्ऋतिरेव च ।

कुबेरसहिता देवा नवतिः सम्प्रकीर्तिता ॥
अनन्तो गरुडो वायुश्चत्वारो ब्रह्मणा सह'

इतिवचनानुसारेणेयं श्रुतिः प्रकारान्तरेण व्याख्याता । सृष्टिस्थितीत्यादिभाष्ये प्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारो जन्मादिर्लक्ष्यते । लक्षणाप्रयोजनं ब्रह्मणः स्रष्टृत्वादिकमेव न तूपादानत्वमिति प्रदर्शनम् ॥

॥ इति जन्माधिकरणम् ॥

[ शास्त्रयोनित्वाधिकरणम् ]

3 – ॐ शास्त्रयोनित्वात् ॐ ॥ १-१-३ ॥

उक्तस्य लक्षणस्यातिव्याप्तिनिरासाय प्रमाणमुच्यत इत्यनन्तरसंगतिः ॥

नन्वेत'त्स्मृत्यनवकाशदोषे'ति स्मृत्यधिकरणेन पुनरुक्तम् । तत्रैवास्यापि सांख्यपाशुपतादिदुरागमानामपि निरासात् । न चेह कर्तृत्वादिकं विष्णोरन्यस्य वेति संदेहः । तत्र तु विष्णोः कर्तृत्वादिकं युक्तमयुक्तं वेति । ततो भेद इति वाच्यम् । एकेनैव सिद्धान्तेन संदेहद्वयनिरासात् । संदेहप्रकारभेदमात्रेण चाधिकरणभेदेऽतिप्रसंगात् । न च स्मृत्यनन्तर्गतयुक्तिविरोधपरिहारः तत्राप्यस्ति ॥

एतेन तत्र समयविगानं संदेहबीजं, अत्र तु पूर्वन्यायप्रसिद्धी इति निरस्तम् । प्रसिद्धेरपि समयमूलत्वात् । न चात्रागमानामर्थान्निरासः । तत्र तु कण्ठत इत्येतावतैवापौनरुक्त्यं । अनुमानस्यापि कारणे प्रामाण्यस्य कण्ठतो निषेधायाधिकरणान्तरारंभप्रसंगात् । न चेहानुमानस्यापि निरासान्न गतार्थतेति वाच्यम् । आगमांशे गतार्थत्वात् । अनेनाधिकरणेन तस्य गतार्थत्वापरिहाराच्च । न चात्र दृष्टफलेषु संवादेन प्रामाण्ये प्राप्ते, दृष्टफलेष्वेव विसंवादेनाप्रामाण्यमिति सिद्धान्तः । तत्र तु सर्वज्ञत्वादिना प्रसिद्धप्रणीतत्वात्प्रामाण्ये प्राप्ते प्रबलस्मृत्यादिविरोधाद्विप्रलंभमूलमप्रामाण्यमिति सिद्धान्त इति वाच्यं । 'इतरेषां चानुप

ऽध्ये'रिति सूत्रेण विसंवादस्य तत्रैवोक्तेः । न चोक्तसिद्धान्तयोर्विनिमयाद्पौन रुक्त्यम् । अनुव्याख्यानविरोधात् । अत्र ह्यनुव्याख्यानम् –

'शैवाद्यागमसंप्राप्तदृष्टगेन फलेन तु'

इति । तत्र तु 'आप्तैः प्रत्यक्षतो दृष्टा' इति । न चेहानुमानमात्रनिरासादग-तार्थतेति वाच्यं । सौत्रशास्त्रपदेन दुरागमानामपि निरासात् । अस्मिन्न-धिकरणेऽनुव्याख्याने 'तर्हि पाशुपतादिशास्त्रेण रुद्रादेः कारणत्वं स्या' दित्यादिटीकाया चागमावष्टंभेनापि पूर्वपक्षयित्वा तन्निरसाच्चेति ॥

उच्यते– तत्र पाशुपतादिस्मृत्या पूर्वपक्षे पंचरात्रादिस्मृत्या सिद्धान्तः । अत्र तु स्मृत्यनुमानाभ्या पूर्वपक्षे श्रुत्यादिरूपेण शास्त्रेण । अत एव तत्र सूत्रे नान्यस्मृतीति स्मृतिशब्दः । अत्र तु शास्त्रशब्दः । न च तर्हीह श्रुत्यादिना सिद्धान्तिते पुनस्तत्र स्मृतिमात्रेण पूर्वपक्षानुदय इति शंक्यम् । गुणहीनायाः पिपीलिकालिपिनिभायाः श्रुतेर्गुणवत्या पाशुपतादिस्मृत्या विरोधेनान्यपरत्वे वाच्ये श्रुतिनूरुपंचरात्रादिस्मृतेरप्यन्यपरत्वम् । पाशुपतादेस्तु शिवादिप्रत्यक्षमूलत्व-मिति तत्र पूर्वपक्षे प्राप्ते, तिष्ठन्तु तावत् श्रुतयः विष्ण्वादिप्रत्यक्षमूलाभिः पंचरात्रादिस्मृतिभिर्विवक्षितार्थसिद्धेरिति सिद्धान्तोपपत्तेः । यद्वा अत्रानुमानेन पूर्वपक्षे तद्द्योग्यत्वेन सिद्धान्तः । तत्र तु शैवाद्यागमेन पूर्वपक्षे तदप्रामाण्येन सिद्धान्त इति भेदः । अत एवात्रा'नुमानत' इति भाष्यम् । तत्र तु 'तेषा वचनविरोध' इति ॥

यत्त्वनुव्याख्याने स्मृत्यधिकरणप्रमेयमिह शिष्यहिताय व्यवहृतं, तदत्र शास्त्रपदेनानुमानस्य जगत्कारणतायामप्रामाण्ये दृष्टान्तीकृतस्य दुरागमस्याप्रामा-ण्यमुपपादयितुम् । अनेनैवाभिप्रायेणात्र भाष्ये ऋगादिक शास्त्रं न तु शैवादिकमित्युक्तम् । अथवा तत्र दृष्टफलेषु संवादादिना प्रामाण्ये प्राप्तेऽति-हेयत्वव्युत्पादनाय दृष्टफलेष्वेव बहुलं विसंवादादिनाऽप्रामाण्यम् । क्वचित्क-चित्संवादस्तु काकतालीय इत्यागममात्रासाधारणन्यायव्युत्पादनम् । इह तु दृष्टफलेष्वंगीकृत्य प्रामाण्यमन्यत्र प्रामाण्यं चेत्कारणत्वेऽपि प्रामाण्यमिति प्राप्ते 'नावेदवि'दित्यादिश्रुते कारणत्वे न मानमित्यनुमानागमसाधारणन्यायव्युत्पा-

दनम् । अत एवात्र 'कारणत्वस्य शास्त्रैकगम्यत्वा'दिति टीका । तत्र तु 'अवैदिकस्मृतीनामप्रमाणत्वा'दिति । यद्वा अत्र विष्णोरन्येषां च कारणत्वमिति समुच्चयेन लक्षणस्यातिव्याप्त्या पूर्वपक्षे विष्णोरेवेत्यवधारणेन सिद्धान्तः । तत्र तु विष्णोः कारणत्वं नेत्यसंभवेन पूर्वपक्षेऽस्तीति सिद्धान्त । अत एवात्र टीकायां 'विष्णोरिवान्यस्याप्यस्ति न वे'ति संदेहः । 'कारणत्वस्य भगवदेकनिष्ठत्वाभावा'दिति पूर्वपक्षोपसंहारश्च । तत्र तु 'युक्तं न वे'त्येव संदेहः । 'न विष्णोः कारणत्वं सिध्यती'ति पूर्वपक्षोपसंहारश्च । सुधाप्यत्र 'अतिव्याप्तिमाशंक्ये'ति, तत्र तु 'शिवप्रभृतीनामेव कारणत्व'मिति । न्यायविवरणं चात्र 'न च रुद्रादौ समस्तेनलक्षण'मिति ॥

यद्यप्यागमप्रामाण्यवादिनेहाप्यसंभवो वक्तुं शक्य· । तथापि वक्ष्यमाणे श्रुतेः स्वतःप्रामाण्यविष्णुपरत्वे समबलता चोपेत्य कालादिभेदेनाविरुद्ध द्वयोः कर्तृत्वम् । श्रुत्यादौ 'स इदं सर्वमसृजते' ति विष्ण्वादेः सर्वकारणत्वोक्तिस्तु तत्तत्कालसृज्याभिप्राया । सर्वस्रष्टृत्वयोग्यताभिप्राया वा । त्वन्मतेऽप्यागामिन्यसृजतेत्यादिनिर्देशायोगात् । श्रुतौ शिवस्यागमे च विष्णोः कारणत्वानिषेधस्तु यथोदितहोमादिनिन्दाऽनुदितहोमादिस्तुतिपरा । तथा विष्ण्वादेः कारणताविधिपर इति प्राप्ते, प्रमाणत्वेनाङ्गीकृतश्रुतिपरिगृहीतया 'ऋग्यजु'रित्यादिभाष्योदाहृतया स्मृत्यैव दुरागमाप्रामाण्यमिति सिद्धान्त· । तत्र तु स्वप्रयोजकगुणप्रयुक्तस्य प्रामाण्यस्य मुख्यत्वादप्रामाण्यप्रयोजकदोषाभावप्रयुक्तस्य तु जघन्यत्वादागमविरोधे श्रुतेस्तद्गृहीतस्मृतेश्च न स्वार्थपरत्वं, किंतु विस्पष्टागमानुसारेणस्पष्टश्रुत्यादि नेयमिति प्राप्ते प्रामाण्यस्य स्वतस्त्वेन सिद्धान्त· । किंचास्य समन्वयप्रस्तावायोक्तलक्षणे ब्रह्मणि प्रमाणप्रतिज्ञार्थत्वेन स्वपक्षसाधकोपन्यासपरत्वात्तस्य च समन्वयोपपादकाविरोधव्युत्पादनाय बाधकोद्धारपरत्वात् द्वयमर्थवत् । अनुमानस्य त्वतिदुर्बलत्वान्न पृथङ्निरासः । 'रचनानुपपत्तेश्च नानुमानम्, पत्युरसामंजस्या'दित्यादौ तु प्रधानस्याचेतनत्वाच्छिवादेश्च जननादिदोषवत्त्वान्न कर्तृत्वयोग्यतेति वक्ष्यते । न तु तत्तदागमाप्रामाण्यमिति न तेनापि पुनरुक्तिः । एवमन्यत्रापि यथासंभवं पौनरुक्त्याशङ्का समाधेया ॥

अत्र जगत्कारणत्वं किमन्यस्यापि किं वा विष्णोरेवेति चिन्ता । तदर्थं कारणत्वं किमनुमानादिविषयत्वयोग्यमुतायोग्यमिति । आगमावष्टंभेन पूर्वपक्षः पौनरुक्त्यनिरासमय एवोक्तः । अनुमानावष्टंभेन पूर्वपक्षस्तु । अनुमानेन रुद्रादीनामपि कारणतासिद्धेरतिव्याप्तिः । न चानुमानमप्रमाणमतिप्रसंगादिति युक्तम् । व्याघातात् । न चान्यत्र प्रमाणमपि जगत्कारणे न प्रमाणम् । नियामकाभावात् । न ह्यु पमानादिवदनुमानं नियतविषयम् ॥

यद्यपि कार्यत्वाद्यनुमानात्कर्तृमात्रं सिध्यति न तु शिवादिः कर्तेति । कर्तृमात्रं च विष्णोः कर्तृत्वाविरोधि । लोकप्रसिद्ध्यादेरुभयत्र तुल्यत्वात् । तथाप्यनुमानं स्वप्रामाण्यनिषेधकश्रुत्युक्ते कर्तरि न पर्यवस्यति । किं त्वागमोक्ते कर्तर्यगीतिव्याप्तिः । यद्वा शिवो जगज्जन्मादिकर्ता सर्वज्ञत्वादित्यादिव्यतिरेकिणा तत्सिद्धिः । सर्वज्ञत्वादिकं चागमसिद्धमित्यागमसहायेनानुमानेनेह पूर्वपक्षः । यद्वा महाकल्पत्वं कल्पत्वव्याप्यधर्मेण स्वाश्रयसमानजातीयकल्पवृत्त्यादिकार्यकर्तृभिन्नकर्तृकादिकार्यवद्वृत्ति । कल्पत्वव्याप्यत्वात् । अवान्तरकल्पत्ववत् । एवं महाकल्पभेदेन कर्तृभेदवत्पालकादिभेदोऽप्यनुमेयः । तथा जगत्संहर्तृत्वं जगत्स्रष्ट्रैकनिष्ठम् । संहारशक्तित्वात् । घटसंहारशक्तिवदिति स्रष्टृसंहर्त्रोर्भेदसिद्धिः । तथा महीमहीधरादि नानाकर्तृकम् । विचित्रकार्यत्वात् । प्रासादादिवत् । एवं च सर्वजगज्जन्मादिकर्तृत्वं लक्षणं चेदसंभवः । कतिपयकर्तृत्वं चेदतिव्याप्तिः ॥

यद्वा सर्वजगन्निर्माणादिशक्तिः स्वमात्रवृत्तिधर्मेण स्वसमानजातीयशक्त्याश्रयभिन्नाश्रिता । निर्माणादिशक्तित्वात् घटनिर्माणादिशक्तित्वत् । जगत्कर्तृत्वं विष्णिवतरवृत्ति, कर्तृत्वव्याप्यत्वात्, घटकर्तृत्ववत् इत्याद्यनुमानैरनेकेषा सर्वजन्मादिकर्तृणां साधकैर्विष्ण्वितरसर्वजगत्कर्तृसिद्धावितरेषां प्रसिद्धशिवाद(द)न्यत्वे गौरवादतिव्याप्तिः । यद्वा कार्यत्वाद्यनुमानेन नित्यज्ञानेच्छाप्रयत्नमात्रवतोनित्यप्रयत्नमात्रवतो वा कर्तुः सिद्धेः त्वया च तस्य विष्णुत्वानङ्गीकारात्संहर्तृत्वादिना रुद्रादिशब्दोदिते तस्मिन्नेवातिव्याप्तिः । न च विष्णोरन्यस्य कारणत्वनिषेधकोदाहृतश्रुतिविरोधः । तासामुक्तयुक्तिविरोधेन विष्णोः कारणत्वविधि

परत्वादिति केवलानुमानेनैव पूर्वपक्ष इति। तदेतदभिप्रेत्योक्तं टीकाया 'अनुमानेन रुद्रादेरपि कारणते'त्यादि। **सिद्धान्तस्तु** —

चक्षुरादि यथाऽशक्तं रसगन्धादिवस्तुषु।
अनुमापि तथाऽशक्ता धर्मब्रह्मादिवस्तुषु॥

'न हि धर्मादिनिश्चयोऽनुमानेने'ति टीकयैव महाकल्पत्वमित्याद्यनुमानेषु श्रुतिबाधादेः 'शशादीना विषाणित्वादौ च कर्तुं शक्यत्वा'दिति टीकाया चातिप्रसङ्गस्योक्तत्वात्। **अनुव्याख्याने च**—

'वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता।
चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेत्'॥

इत्यतिप्रसङ्गस्य प्रपञ्चितत्वादन्यत्र कार्यत्वादिहेतूना सप्रपञ्च निरासात् 'नावेदवि'दित्यादि श्रुत्या जगत्कारणेऽनुमानप्रामाण्यनिषेधाच्च नानुमानं जगत्कारणे प्रमाणमिति। आगमाश्रयपूर्वपक्षनिरासस्तु पौनरुक्त्यपरिहारावसर एव विवृतः॥

अत्र परेषां भाष्ये **शास्त्रस्य** योनिरिति विग्रहमाश्रित्य 'ऋगादिकारणत्वं ब्रह्मण इहोच्यते। पूर्वसूत्रेऽर्थलब्धस्य सार्वज्ञस्य स्फोरणार्थ'मित्युक्तम्। **तन्न**। लक्षणानन्तरमवश्यापेक्षितप्रमाणपरत्वसंभवेऽन्यपरत्वायोगात्। त्वदभिमतभ्रमाधिष्ठानत्वरूपकारणत्वेन सार्वज्ञालाभाच्च। पूर्वसूत्रेऽर्थलब्धसर्वशक्त्यादित्यागेन सार्वज्ञस्यैव स्फोरणे निमित्ताभावाच्च। सांख्याभिमताचेतनकारणतायाश्च चेतनत्वमात्रेण निषेधसंभवात। सांख्यानङ्गीकृतेन शास्त्रयोनित्वेन सार्वज्ञस्य साधनायोगाच्च। श्रुत्या शास्त्रयोनित्वं तेन सार्वज्ञं प्रसाध्य तेन प्रधानस्य कारणता-निषेधाद्वरं श्रुत्यैव तन्निषेधः। जगन्निर्माणेनास्फुटीकृतस्य सार्वज्ञस्य तदेकदेशशास्त्रनिर्माणेन स्फुटीकरणायोगाच्च॥

अत्र **भामतीविवरणोः** 'जगत्कारणत्वेन सिद्धे सार्वज्ञे शास्त्रयो-नित्वं हेत्वन्तरमुच्यते। वेदः स्वविषयादधिकविषयकज्ञानवत्प्रणीतः, वाक्यप्रमाणत्वात्, पाणिन्यादिशास्त्रवत्' इत्युक्तम्। **तन्न**। एकार्थमात्रज्ञेन प्रयुक्तस्यानेकार्थस्य शब्दस्याबाधितानेकार्थबोधकत्वदर्शनात्। नन्वन्योऽर्थो

न तात्पर्यविषय इति चेत्तर्हि प्राशस्त्यपरार्थवादप्रतीतवायुक्षेपिष्ठादिसंसर्गज्ञं ब्रह्म न स्यात्। पदार्थज्ञानं विना पदप्रयोगायोगेऽपि संसर्गज्ञानासिद्धेः। मानान्तरप्राप्ते संसर्गेऽवान्तरतात्पर्यस्याप्यभावात्। किंच वेदस्यातत्त्वे तात्पर्ये प्रामाण्यायोगात्तत्त्वे चिन्मात्रे तात्पर्याद्ब्रह्मापि तन्मात्रज्ञं स्यात्। किंच प्रत्यक्षादिसिद्धस्य घटादेर्निष्प्रयोजनस्य गङ्गावालुकेयत्तादेश्च शास्त्राविषयत्वात्तज्ञं ब्रह्म न स्यात्। अपि च न तावदर्थमुपलभ्य रचयितृत्वं प्रणेतृत्वम्, पौरुषेयत्वापातात्। नाप्यध्यापकवदुच्चारयितृत्वमात्रम्, तेन सार्वज्ञासिद्धेः। किंच स्वव्यतिरिक्तोपदेश्यपुरुषगोचरस्य भ्रमस्य भ्रान्तिसिद्धशरीरादेश्चाभावे उच्चारणायोगात्तस्य चासार्वज्ञ विनाऽसंभवाच्छास्त्रयोनित्वमसार्वज्ञ एव हेतुः॥

**विवरणे** तु 'यथा दीपगता प्रकाशनशक्तिस्तदुपादाने वह्नौ, तथा वेदगता सर्वप्रकाशनशक्तिस्तदुपादाने ब्रह्मणि, कार्योपादानयोरेकशक्तित्वादित्युक्तम्। **तन्न**। कारणेऽदृष्टस्यापि शक्तिविशेषस्य कार्ये दर्शनात्। किंच त्वन्मतेऽन्धकारदहनादेरपि ब्रह्मोपादानकत्वात्तद्गताप्रकाशनदाहादिशक्तिमद्ब्रह्म स्यात्। अविद्यापि शास्त्रोपादानमिति सापि सर्वज्ञा स्यात्। किंच परिणामिपरिणामयोरेकशक्तित्वेऽपि कथमधिष्ठानाध्यस्तयोस्तत्। एतेनाधिष्ठानस्य ब्रह्मणो विज्ञानशक्तिविवर्तरूपं शास्त्रमिति निरस्तम्। अविद्याकाशादेरपि तद्विवर्तत्वेन शास्त्रवत्सर्वप्रकाशकत्वापातात्। रज्ज्वामपि भयकम्पादिशक्तेः ब्रह्मण्यप्यावरणविक्षेपादिशक्तेः प्रसङ्गाच्च। बाह्यागमानामपि ब्रह्मविवर्ततया तदर्थज्ञत्वे ब्रह्मणो भ्रान्तत्वप्रसङ्गाच्च। अपि च त्वया कार्योपादानयोरेकशक्तित्वस्योक्तत्वाद्वेदः स्वयमज्ञ एव जीवान्प्रति प्रकाशक इति ब्रह्मापि तथा स्यात्। तथाच सार्वज्ञार्थं यत्नेऽत्यन्ताज्ञत्वमेवापन्नम्। किंच जन्मादिकारणत्वेनैवोपलक्षणेनोपलक्ष्यस्वरूपसिद्धेः किं निर्विशेषत्वप्रतिकूलसार्वज्ञस्फोरणादिना॥

ननु तर्हि पूर्वसूत्रोक्तसर्वकारणत्वाक्षेपे तत्समाधानार्थमिदमस्तु। उक्तं हि कल्पतरौ —

'अथवा वेदनित्यत्वाद्ब्रह्मणो विश्वयोनिता।
नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते॥'

इतीति चेन्न । अस्य श्रुतीनां परस्परविरोधपरिहारेण 'यावद्विकार'मित्यादिसूत्रोक्तैः भिन्नत्वादिसाधारणहेतुभिः ब्रह्मेतरसर्वानित्यत्वप्रतिपादके वियत्पादे वक्तव्यत्वात् । किंचाध्यापकेऽपि पूर्वपूर्वसदृशानुपूर्वीरचयितृत्वस्य भावात् अभिनवानुपूर्वीरचयितृत्वादेश्च ब्रह्मण्यप्यभावात् अध्यापकादधिकस्य शास्त्रयोनित्वस्य ब्रह्मण्यसिद्धिः । ननु बहुकालविरतसम्प्रदायस्य वेदस्य सर्गादावकस्मान्निस्सरणं ब्रह्मण्यधिकमिति चेन्न । जन्मादिसूत्रेऽस्येत्यनेन शास्त्रस्यापि विवक्षाया घटादिकं प्रति प्रसिद्धकर्तृत्वस्याकाशादीन्प्रतीव लौकिकप्रमाणवाक्यं प्रति प्रसिद्धकर्तृत्वस्य शास्त्रं प्रति वक्तव्यतया निस्सरणावधित्वस्यानुक्तत्वेनेह तत्समर्थनायोगात् ॥

एतेनैव 'अस्य महत' इत्यादिवेदवाक्यं ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं न साधयति वेदस्य सापेक्षत्वप्रसङ्गादिति पूर्वपक्षे साधयति अर्थमुपलभ्य रचयितृत्वस्याभावात् । उच्चारयितृत्वमात्रस्य च सापेक्षत्वानापादकत्वादिति परेषामधिकरणमपास्तम् । 'अस्य महत' इत्यादेरनुमानरूपत्वाभावाच्च ॥

केचित्तु जगत्कारणं न वेदवाक्यप्रतिपाद्यम् । अनुमानेन सिद्धेः । तथाच वाक्यानामनुमानप्रामानुवादित्वेनाविचार्यत्वमिति प्राप्ते, अत्यन्तातीन्द्रियत्वेन प्रत्यक्षाद्यविषयत्वात् कार्यत्वाद्यनुमानानां दुष्टत्वेनेश्वरासाधकत्वाच्च वेदान्तवेद्यत्वमित्यननुवादकानां वेदान्तानां विचार्यत्वमिति सिद्धान्त इत्याहुः । तत्र ब्रूमः 'यतो वे'त्यादि वाक्यं प्रसिद्धार्थयच्छब्दयोगाद्वाक्यान्तरसिद्धकारणत्वानुवादेन तस्य लक्षणत्वविधायकमिति हि ते मतम् यथोक्तं 'यच्छब्दयोगात्कारणत्वमनूद्यत' इति 'ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेय'मिति च । एवं च कारणत्वस्याऽऽनुमानिकत्वेऽपि तदनुवादेन लक्षणत्वविधायकस्य 'यतो वे'त्यादेरनुवादकत्वासिद्धेस्तत्सिद्ध्यर्थं कारणत्वस्य ब्रह्मलक्षणत्वमानुमानिकमिति पूर्वपक्षयितव्यम् । तदेव च शास्त्रयोनीति सिद्धान्तयितव्यं स्यात् । किंच कारणवाक्यस्यानुवादकत्वेऽपि 'सत्यकामः सत्यसङ्कल्पः, हिरण्यश्मश्रुर्हिरण्यनखः' इत्यादीनामकारणवाक्यानां विचारः पूर्वपक्षेऽपि सेत्स्यत्येव । न च जिज्ञासासूत्रे कारणवाक्यस्यैव विचारः प्रतिज्ञातः, येनेह पूर्वपक्षे स आक्षिप्येत । किंचास्य

सूत्रस्य जन्मादिसूत्रस्य च कारणमात्रविचारसाधकत्वे कारणाकारणवाक्यविचार साधकाद्यचतुर्थसूत्रमध्यस्थत्वमयुक्तम् ॥

एतेनैवाद्वैतिना, शास्त्रं योनिः – ज्ञप्तिकारणमस्येति विग्रहाश्रयणेन पूर्वोक्तलक्षणस्यानुमानतोपमर्दनेनागमोपदर्शनार्थमिदमधिकरणमिति वर्णकान्तरं निरस्तम् । प्रमेये विशेषाभावे प्रमाणे विवादायोगात् । किंचाद्यसूत्रे ब्रह्म-शब्देन बृहत्त्वादिधर्मवत्तया द्वितीयसूत्रे च कारणत्वादिधर्मवत्तयोक्ते उत्तर त्रापि 'ईक्षतेर्नाशब्दं, अन्तस्तद्धर्मोपदेशात्, आकाशस्तल्लिङ्गा'दित्यादावीक्षि तृत्वादिभिस्तैस्तैरसाधारणधर्मैः कारणत्वादिविशिष्टतया तत्तद्वाक्यार्थत्वेन वक्ष्य माणे ब्रह्मणि शास्त्रं प्रमाणं, किं वा बृहत्त्वकारणत्वादिधर्मरहिते पञ्चमाध्याय सिद्धे त्वदभिमते शून्यब्रह्मणि ? नाद्यः, तस्यातात्विकत्वात् । न च तत्व जिज्ञासुं प्रत्यादित एव शास्त्रस्यातत्वावेदकत्वं वक्तुं युक्तम् । अन्त्ये तु पूर्वोत्तराविरोधाय न ब्रह्मजिज्ञासा, न जन्माद्यस्य यतः, अनीक्षतेरित्यादिः सूत्रविन्यासः स्यात् । उक्तं चानुव्याख्याने —

सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते ।
मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणता ॥' इति

किञ्च, यत्सत्यं नैव तद्वेद्यं यद्वेद्यं तच्च नैव सत् ।
इति ते समयस्तत्र कुत्रार्थे शास्त्रभानता ॥

आधुनिकरीत्या फलव्याप्यत्वं इति कल्पने प्रतिवाद्यसिद्धिर्नित्यातीन्द्रियेषु वाद्यसिद्धिरप्रयोजकता च । अपि च शास्त्रपदेनानुमानवद्दुरागमस्यापि निरासप्रतीतेर्नानुमानमात्रनिरासपरं सूत्रम् ॥

यादवप्रकाशीये तु यतो वेत्यादिवाक्येन कारणत्वमनूद्य ब्रह्मज्ञानं विधेयम् । अन्यथा वाक्यभेदापातात् । तच्चायुक्तं । कारणत्वस्य माना न्तरेणाप्राप्तेरिति शङ्कायां 'सदेव सोम्ये'त्यादिशास्त्रान्तरेण प्राप्तिरस्तीति वक्तुं शास्त्रयोनिसूत्रमित्युक्तम् । तन्न । लक्षणानन्तरमत्याकाङ्क्षितप्रमाणपरत्वसंभवे ऽन्यपरत्वायोगादित्युक्तत्वात् । शास्त्रयोनित्वहेतोः पूर्वसूत्रोक्तप्रस्तुतब्रह्मकारणत्व रूपसाध्यान्वयसंभवे ऽनुवादकत्वरूपाध्याहृतसाध्यान्वयायोगाच्च ॥

अयं न दोषो मतान्तरेऽपि समः । अद्वैतिमते पूर्वसूत्रे कण्ठोक्त कारणत्वत्यागेनार्थाक्षिप्तसार्वज्ञ्यान्वयात् , केषाचित्पक्षे व्यवहिताद्यसूत्रोक्त विचारकर्तव्यतयाऽन्वयात् ॥

टीकाक्षरार्थन्तु – **ऐक्याभिप्रायाभावे पञ्चरात्राधिक्यकथनमिति** ॥ वेदारण्यकशब्देन पञ्चरात्रस्याविवक्षाया 'एतेष्वेनद्विशिष्यत' इति निर्धारणा योग । पञ्चरात्रस्य प्रागनिर्देशात् । वेदविरुद्धतया निर्दिष्टसाख्याद्यैक्यमभि प्रेत्य साख्यादिशब्देन पञ्चरात्रविवक्षाया तु पञ्चरात्रादेर्वेदाद्प्याधिक्यमुक्त स्यात् । न च तद्युक्तम । वेदविरोधेनालब्धप्रामाण्यस्य तस्य वेदाधिक्यस्य दूरनिरस्तत्वात् । वेदारण्यकशब्देन पञ्चरात्रविवक्षा तु वेदारण्यकैक्याभिप्रायं विना न युक्तेत्यर्थः । **यद्वा** अदृष्टविषयस्य पौरुषेयवाक्यस्य पञ्चरात्रस्य वेदैकार्थत्वरूपवेदमूलत्वाभावे प्रामाण्यरूपमाधिक्यं न स्यादित्याधिक्योक्त्य- न्यथानुपपत्त्या वेदमूलत्वसिद्धिरित्यर्थः ॥

किं नोच्यत इति प्रश्नस्योत्तरमाह – **पञ्चरात्रप्रामाण्यसिद्ध्यर्थमिति** ॥ वेदप्रामाण्योक्तौ हि न पञ्चरात्रप्रामाण्यसिद्धिः । न ह्यदृष्टविषयस्यापि वेदस्या पौरुषेयस्य प्रामाण्यं पञ्चरात्रप्रामाण्यं विनाऽनुपपन्नम् । न च मूलप्रामाण्योक्तौ मूलिनोऽपि तत्सिद्धिः । वेदपञ्चरात्रयोर्मूलमूलिभावस्याद्याप्यसिद्धेरिति भावः । ॥ **पञ्चरात्रप्रामाण्योक्ताविति** ॥ पञ्चरात्रस्यावेदमूलत्वे मूलस्य वेदस्या प्रामाण्ये वा प्रामाण्यायोगात्पञ्चरात्रप्रामाण्योक्तौ वेदप्रामाण्यसिद्धिरित्यर्थः । ॥ **समासप्राबल्यादिति** ॥ समस्यमानपदार्थत्यागेनान्यपदार्थप्रधानाद्बहुव्रीहे स्तत्पुरुषस्य तदत्यागेनोत्तरपदार्थप्रधानस्य प्राबल्यमिति भावः ॥

॥ इति शास्त्रयोनित्वाधिकरणम् ॥

[ समन्वयाधिकरणम ]

**4 – ॐ तत्तु समन्वयात् ॐ ॥ १-१-४ ॥**

शास्त्रयोनित्वेन कारणत्वस्य नातिव्याप्तिरिति पूर्वाधिकरणफलाक्षेपाद्वा पूर्वाधिकरणसिद्धकारणस्य शास्त्रयोनित्वं विष्णोरन्यस्य वेति विशेषविचाराद्वा

ऽनन्तरसङ्गतिः ॥ अत्र शास्त्रयोनित्वं किमन्यस्यापि किं वा विष्णोरेवेति चिन्ता । तदर्थं वेदतात्पर्यनिश्चयः किं वा शैवागमादिना, किं वोपक्रमादिनेति । तदर्थमुपक्रमादेर्बलाबलव्यवस्था संभवत्युत न संभवतीति ॥

**पूर्वपक्षस्तु** – कारणत्वस्य शास्त्रयोनित्वेऽप्यतिव्याप्तिः, शैवाद्यागमाद्वेदव्याख्यानरूपा(द्वेदजप्रतीत्यनुगुणा)न्मानान्तराविरुद्धाद्रुद्रादेः कारणत्वे वेदतात्पर्यनिश्चयात् । काव्यादिव्याख्यानादिव काव्यस्य । तदुक्तं 'व्याख्यानतो विशेषप्रतिपत्ति'रिति । उक्तं ह्यागमेषु 'ज्ञात्वा शिवं शान्तिमत्यंतमेतीत्यादि शास्त्रं शिवस्य मोक्षदत्वादिपर'मिति । न च प्रमाणभूतव्याख्येयप्रतीत्यनुसारिव्याख्यानप्रामाण्ये मानान्तराविरोधं विना हेत्वंतरापेक्षाऽस्ति । न च कारणत्वमिव शास्त्रतात्पर्यमपि शास्त्रगम्यम् । आत्माश्रयात् । येन शैवागमादिः तात्पर्यनिश्चायकः स्यात् । सर्वे वेदा यत्पदमामनन्तीत्यादि श्रुतिरपि शिवे वेदतात्पर्यमित्येवंपरतयाऽऽगमैरेव व्याख्याता ॥

न चैवं पञ्चरात्रादिना विष्णावपि तात्पर्यनिश्चयापत्तिः । तथापि सिद्धान्त्यभिप्रेतावधारणासिद्धेः । उपक्रमादि तु न तात्पर्यनिश्चायकम् । अश्वप्रतिग्रहेष्टिरुपक्रमाद्दातुरुपसंहारात्प्रतिग्रहीतुरिति प्रसङ्गात् । परस्परविरोधे मानान्तरविरोधं विनैकेनान्यस्य बाधस्त्वयुक्तः । द्वयोरपि शास्त्रैकदेशत्वेन तुल्यत्वात् । न चानुपसंजातविरोधित्वेन पूर्वस्योपक्रमस्य बलीयस्त्वेनोपसंहारस्यास्वारस्यम् । अपच्छेदादौ परबलीयस्त्वस्यापि स्वीकारात् । न चोपसंहारस्य व्याख्यानरूपतया बलीयस्त्वेनेतरास्वारस्यम् । वेदोपक्रमाद्यधिकरणेषूपक्रमबलीयस्त्वस्याप्युक्तेः । पौरुषेयवाक्ये तु विवक्षानुसारेणान्यन्नेयम् । अभ्यासोऽपि न तात्पर्यधीहेतुः । असकृदुक्तेः वैयर्थ्यात् । अन्यथा समिधो यजतीत्यादावभ्यासात्कर्मभेदो न स्यात् । पौनरुक्त्यं न क्वापि दोषः स्यात् । मानान्तराग्राह्यार्थत्वरूपाऽपूर्वतापि न तात्पर्यधीहेतुः । श्रुतिमूलस्मृत्या सर्वज्ञत्वादिसाधकसर्वकर्तृत्वाद्यनुमानेन जगत्सत्यत्वजीवेशभेदादिग्राहिप्रत्यक्षेण च गृहीतार्थायाः श्रुतेरतात्पर्यप्रसङ्गात् । फलमपि न तात्पर्यधीहेतुः । अश्रुतफलानां नित्यादिवाक्यानामतात्पर्यापातात् । अफले श्रुतितात्पर्यानुपपत्त्या च

फलकल्पनेऽन्योन्याश्रयात् । एवमर्थवादोऽपि । लोके वेदे चार्थवादादीनाना मपि तात्पर्यदृष्टेः । उपपत्तिरपि श्रुत्युक्ता वा अनुक्ता वा । न द्वयमपि । सापेक्षत्वेनानपेक्षत्वरूपप्रामाण्यहानेः । अत एव 'तेन ह्यन्नं क्रियत' इत्यादि हेतुवन्निगदार्थवादस्य हेतुसमर्पकत्वेऽप्रामाण्यप्रसङ्गात्तत्त्यागः । तस्मान्नोपक्रमा दिना तात्पर्यनिश्चयः । किंतु सर्वज्ञप्रणीतागमादेव ॥

यद्वा शास्त्राद्रुद्रादेः कारणता तावद्भाति । तत्र शास्त्रतात्पर्यं चाबाधितप्रतीत्या निश्चीयते । न हि रुद्रादेः कारणत्वे शास्त्रादन्यद्बाधकमस्ति । नैषा तर्केणेत्यादि श्रुत्या कारणतायामशास्त्रस्य साधकताया इव बाधकताया अप्यभावात् । नापि विष्णोः कारणत्वसाधकं रुद्रादेः कारणत्वनिषेधकं वा शास्त्रं बाधकम् । वैपरीत्यस्यापि सम्भवात् । पूर्ववादिनश्च सिद्धान्त्यभिमत विष्ण्वेकनिष्ठत्वनिश्चयविघटनेन कृतार्थत्वात् । कालादिभेदेन विष्णोः कारण त्वस्य रुद्रादेः तदभावस्य चोपपत्तेश्च । अबाधोपपत्तौ च बाधस्यान्याय्यत्वात् । पक्षे बाधस्य च षोडशिग्रहणयोरिव न्यायप्राप्तत्वात् । यदि च पौरुषेयेण पूर्वापरपरामर्शेन शब्दस्वरसप्रतीतत्यागः, तदा पुरुषोत्प्रेक्षयाऽपौरुषेयः शब्दो बाध्येत । एवं च विष्णोरेव कारणत्वे सर्वैः कारणवाक्यैः प्रतिपाद्यत्वस्य हेतुत्वेऽसिद्धिः । कतिपयप्रतिपाद्यत्वस्य हेतुत्वे तु व्यभिचार इति ॥

अत्र चाद्यपूर्वपक्षो 'न च पाशुपतशास्त्रोदितत्वादि शास्त्रप्रतिपाद्यत्वे कारण' मिति न्यायविवरणोक्तः । द्वितीयस्तु 'अज्ञानां प्रतीयमान' मिति भाष्योक्तः । अत एव सुधायां 'न शास्त्रतात्पर्यावगता वापातप्रतीतिर्वा व्याख्यातृवचनं वा लिङ्ग' मित्युक्तम् । अत्र तु टीकायां न्यायविवरणे आदिपदेन प्रतीतेर प्युक्तत्वाद्भाष्ये प्रतीत्या पाशुपतादिशास्त्रस्याप्युपलक्षणात्प्रतीतिसध्रीचीनागमेनैक एव दृढः पूर्वपक्षो दर्शितः ॥

सिद्धान्तस्तु—

व्याख्यातृवचनानां यैर्लिङ्गैस्तात्पर्यनिश्चयः ।
उपक्रमाद्यैस्तैरेव श्रुतितात्पर्यनिर्णयः ॥
आपातजप्रत्ययाश्च परस्परविरोधिनः ।

अविरुद्धा प्रतीतिस्तु पूर्वापरविमर्शजा ॥

अनिश्चिततात्पर्यस्यागमस्य शास्त्रतात्पर्यानिश्चायकत्वादुपक्रमादिभिरागमतात्पर्यनिश्चये वेदेऽपि तैरेव लोके क्लृप्तैस्तन्निश्चयोऽस्तु । न हि मानान्तराविरुद्धप्रामाधीविषयेऽप्युपक्रमाद्यननुगुणे व्याख्यानेनापि तात्पर्यम् । अन्यथा परेणापि कालादिभेदेन वाक्यद्वयविरोधो न परिहार्यः स्यात् । न च लोके वक्त्रुपदेशेन वा तन्मूलव्याख्यानेन वा तात्पर्यधीर्न तूपक्रमादिनेति शक्यम् । वक्तरि तात्पर्यमनुपदिश्य नष्टेऽपि तात्पर्यधीदर्शनात् ॥

यत्तूक्तमापातप्रतीतत्यागे शब्द एव बाधितः स्यादिति—तन्न ।

आपाततो भ्रमप्राप्तमर्थं हित्वा विमर्शतः ।
गहनश्रुतितात्पर्यविषयोऽन्विष्यते यतः ॥

एव चापातप्रतीतत्यागे पुरुषे भ्रान्तिरेव त्यक्ता भवति । न वेदार्थः । कुत ?

न हीक्षुलेहनेनैव ज्ञात इक्षुरसो भवेत् ।
न चेक्षुदण्डं निष्पीड्य लब्धो नेक्षुरसो भवेत् ॥

न ह्यनन्तशाखात्मकत्वात्स्वरूपे वाऽपरिच्छेद्यो नानानिगमनिरुक्तव्याकरणादिना विना दुर्बोधपदार्थो नानान्यायकलापं च विना दुरधिगमवाक्यार्थश्च वेदः सुबोधार्थः । तदुक्तं वार्तिके—

'अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥
पौर्वापर्यपरामृष्टः शब्दोऽन्यां कुरुते मतिं' इति ॥

एतेन पुराणादेरप्यापातप्रतीतार्थं वदन्तो निरस्ताः ॥

उपक्रमादयोऽपि सावकाशत्वनिरवकाशत्वादिनाऽऽलोचिताः तात्पर्यप्रमापकाः । तात्पर्यज्ञानं च साक्षात्प्रतिबन्धनिरासेन वा शाब्दप्रमाधीहेतुः । उपक्रमादीनि च शेषत्वादौ श्रुतिलिङ्गादीनीव तात्पर्ये प्रत्येकं प्रमाणानीत्येकैकस्याननुगमेऽपि न दोषः । न ह्येकमनेकलिङ्गैर्न साध्यते । दुरधिगमेऽसंभाविते़ऽर्थे तात्पर्याभावशङ्कानिरासार्थमसकृदुक्तिश्चार्थवती । यत्र शपथरूपत्वं वा प्रकृतो

पयोगिप्रमेयान्तरकथनेन पुनस्तदुपसहाररूपत्व वाधिकविवक्षादिकं वा नास्ति केवल ज्ञातज्ञापकता तत्र पौनरुक्त्यं दोषः । 'समिधो यजतीडो यजती'त्या दावसकृदुक्तेर्भिन्नप्रकारत्वेनैकप्रकारामकृदुक्तिरूपतात्पर्यलिंगाभ्यासाभावात पञ्च प्रयाजा इति सख्याभेदस्य समिदादिनामभेदस्य च सत्त्वाच्चाऽविशेषपुन.श्रुति-रूपाभ्यासात्कर्मभेदः । यत्र त्वमकृदुक्तिरेकप्रकारा उक्तं च बाधकं नास्ति तत्राभ्यासात् 'अहो दर्शनीया' 'अहो दर्शनीया' इत्यादिसिद्धार्थवाक्य इव 'एह्येहि फुल्लाम्बुजपत्र नेत्र, बध्यता बध्यता बाल' इत्यादिसाध्यार्थवाक्येऽपि तात्पर्यधीर्दृष्टैव ॥

अपूर्वता तु स्वबोधनीयपरुषगताज्ञानादिविरोधिना स्वानुपजीविमानान्त-रेणाग्राह्यार्थत्वम । वेदार्थस्य धर्माधर्मादेरीश्वरसार्वज्ञादेश्च स्वोपजीविना स्मृति-वाक्येन सर्वकर्तृत्वाद्यनुमानेन च ग्राह्यत्वेऽपि तयोर्वेदोपजीवित्वाद्वेदस्यापूर्वता । वेदार्थस्य वेदानुपजीवीश्वरप्रत्यक्षग्राह्यत्वेऽपीश्वरस्य वेदबोधनीयत्वाभावात् वेदाबोधनीयास्मदादिगताज्ञानं प्रति चेश्वरज्ञानस्याविरोधित्वाद्वेदस्यापूर्वता । प्रत्यक्षग्राह्येऽर्थे प्राक्प्रवृत्तस्य शब्दस्य तदगृहीतार्थत्वेऽपि तद्ग्राह्यार्थत्वादपूर्वत्वा-भाव· । अत एवावघातादेर्वैतुष्यसाधनताया वेदानुपजीविमानान्तरग्राह्यत्वेन 'व्रीहीनवहन्ती'त्यादेरपूर्वविधित्वासमवान्नियमविधित्वमाश्रितम् ॥

अत एव च 'इमामगृभ्णन्रशनामृतस्ये'त्यादेः स्वरूपसिद्ध्याऽऽदौ स्वानु पजीविना मन्थरगामिना मन्त्रसामर्थ्यरूपेण लिंगेन गृहीतार्थत्वाभावेऽपि ग्राह्या र्थत्वेनापूर्वविधित्वासंभवात्परिसंख्यात्वमुक्तं । 'य एवं विद्वा'नित्याद्यनुवादस्य स्वानुपजीविना पुरोवादरूपेणाग्नेयादिवाक्येनाऽगृहीतार्थत्वाभावा[नगृहीतार्थत्वा] दपूर्वार्थत्वाभावः । 'दध्ना जुहोती'त्यादिना ग्राह्यार्थत्वान्न होमांशेऽपूर्वता । किंतु तदग्राह्यदध्यादौ । एवं देवतासहितकर्मविधायकस्य ब्राह्मणवाक्यस्य स्वविहिते कर्मणि देवतार्पकं समानशाखास्थं शाखान्तरस्थं वा मन्त्रं प्रत्युपजी व्यत्वाद्देवतांशेप्यपूर्वता । मन्त्रस्य तु तदंशे नापूर्वता । किंतु ब्राह्मणा प्राप्तदेवतागुणादौ । भिन्नशाखास्थयोश्चैककर्मविधायकयोर्वाक्ययोर्मध्ये यत्र वाक्ये द्रव्यदेवतात्म्ययागरूपं वा इतिकर्तव्यताभूयस्त्वं वा तत्रैव कर्म-

विधिः । इतरस्य तु तदनुवादेनेतिकर्तव्यताविधायकत्वमिति स्वीकारात् । इति-कर्तव्यताविधायकस्य कर्मविधायकोपजीवित्वान्न कर्मांशेऽपूर्वता । किं त्विति-कर्तव्यतांशे ॥

यदि शाखाद्वयस्थे वाक्यद्वयेऽपि द्रव्यदेवतारूपं वेतिकर्तव्यतासाम्यं वा तत्र मीमांसकमते एकस्मिन्यजुरादिरूपे वेदे आध्वर्यवौद्गात्रादिसर्वकर्मानुद्देशेन 'स त्रिभिर्विधीयत' इति वचनात् त्रयीं विना सर्वांगोपेतकर्मानवगतेर्वेदत्रयस्याध्येतव्यत्वनियमवदेकैकस्या तैत्तिरीयादिरूपायां शाखाया सर्वाध्वर्यवादिकर्मोद्देशेन काण्वादिशाखान्तरस्याध्येतव्यत्वनियमाभावात्तत्तच्छाखाध्यायिनं प्रति तत्तद्वाक्यस्य व्यवस्थाया बोधकत्वादपूर्वतापि व्यवस्थितैव ॥

अस्मन्मते तु शाखाभेदोऽशक्तविषय इति तृतीये वक्ष्यमाणत्वाच्छक्तान् प्रति मीमांसकमते वेदद्वयस्थवाक्यद्वयवच्छाखाद्वयस्थवाक्यद्वयेऽपि क्रयवाक्यवदव्यवस्थितविकल्पेन विधायकत्वम् । अशक्तान्प्रति तु व्यवस्थितविकल्पेन विधायकत्वमित्यपूर्वतापि व्यवस्थितैव । अत एव स्मृतीना स्वानुपजीविवेदग्राह्यार्थत्वेऽपि वेदे नानाशाखास्वस्पष्टं विक्षिप्योक्तस्य स्मृतिभिरिव वेदेन स्मृतिबोधनीयैरस्मदादिभिरग्राह्यत्वादपूर्वतापि । अपूर्वत्वाभावेऽपि वा सप्रयोजनत्वात्स्मृतीना विद्वद्वाक्यवदनुवाद्यपरता ॥

एवं वादिविप्रतिपत्तिजन्यातत्वावेदकत्वशङ्काकलङ्किनेनासर्वविषयेण प्रत्यक्षेण 'विश्वं सत्य'मित्यादिवाक्येनेव जगत्सत्यत्वाप्राप्तेस्तद्वाक्यस्यापूर्वता । तदभावेऽपि वा सप्रयोजनत्वात्तात्पर्यम् । तदेतदभिप्रेत्यान्यत्र टीकाकारैः प्राचुर्येण 'मानान्तराप्राप्तिरपूर्वते'त्युक्तम् । अत्रापि टीकायामेतदेवाभिप्रेतम् । स्तुतौ निन्दायामेककर्तृकोपाख्यानरूपपरकृतौ बहुकर्तृकोपाख्यानरूपपुराकल्पे चार्थवादशब्दोऽक्षादिशब्दवन्नानार्थः । मन्त्रशब्दवदभियुक्तप्रयोगरूपैकोपाधिको वा विधिशेषत्वरूपैकोपाधिको वेति द्रष्टव्यम् । तत्र चैकप्रकरणे प्रथमेनार्थे धीस्थे चरमस्य तद्विषयस्य प्रथमस्वारस्यविरोधिनोऽप्यवैयर्थ्याय प्रथमव्याख्यानरूपताया· लोके गामानय बलीवर्दमानयेत्यादौ वेदे च वासः परिधत्ते यत् क्षौममित्यादौ दर्शनात् निश्चितप्रामाण्यव्याख्यानानुसारेण च व्याख्येयस्य

'अशनापिपासे ह वा उग्रं वचः' इत्यादि ब्राह्मणानुसारेण 'उग्रं वचोपावधी' मित्यादिमन्त्रस्येव 'सदिति प्राणस्तीत्यन्नं यमित्यसावादित्य' इत्याद्यनुसारेण च सत्यमित्यादेरिव च नेयत्वात् ॥

तथा पूर्वबाध उत्तरस्यानुत्थानाच्चोपक्रमादुपसंहारस्य प्राबल्यं यथा 'प्रथमे ऽश्रवणादिति चेन्न ता एव ह्युपपत्ते'रित्यत्र 'श्रद्धा जुह्वती'त्युपक्रमात् 'इति तु पञ्चम्यामाहुतावाप·' इत्युपसंहारस्य । तत्र ह्यप्शब्दानुसारेण श्रद्धाशब्दस्य लक्षणा वक्ष्यते । न चैवं वेदोपक्रमाधिकरणविरोधः । न हि तत्र 'उच्चैर्ऋचा क्रियते' इत्युपसंहारस्थऋगादिशब्दस्त्रयो देवा इत्युपसंहारस्थवेदशब्दमात्राद्वेदे लाक्षणिकः । किन्तु 'अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद' इति वेद शब्दाभ्यासात् । नाप्यश्वप्रतिग्रहेष्टिनयविरोधः । तन्त्रसारे —

'मैत्रायणीयशाखाया दात्रुपक्रमतोऽप्यृते ।
कर्माङ्गत्ववशादेव दातुरिष्टिःप्रतीयत'

इत्युपक्रमं विनैव दातुरिष्टिरित्युक्तत्वात् ॥ शास्त्रदीपिकायामपि 'सा लिंगादार्त्विजे स्या'दिति सूत्रानुसाराद्भाष्यकारान्तरैः 'तत्राप्युपसंहारानुरोधा-त्प्रतिग्रहे दातुरेवेष्टिरित्युक्त'मित्युक्तत्वात् । याज्ञिकैरपि तथैव स्वीकृतत्वात । प्राभाकरैरपि' पौण्डरीके श्रूयत इति कृत्वा चिंतेयम् । अन्यथा दातुरि-ष्टिरिति सिद्धान्तासिद्धे'रिति वदद्भिर्वस्तुतः प्रतिग्रहीतुरिष्टिरिति स्वीकृतत्वाच्च । तदुक्तं न्यायविवरणे 'उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमंगीकर्तव्यम् । व्याख्यानस्य पश्चात्तनत्वनियमा'दिति । विस्तृतं चैतदन्यत्र ॥

एवमुपसंहारादिरूपसकृदुक्तितोऽसकृदुक्तिरूपाभ्यासस्य प्राबल्यम् । बहुबाधस्यान्याय्यत्वात् । यथाऽऽनन्दमयाधिकरणे 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'तिर्जीवप्रापकोपसंहाराद्ब्रह्मशब्दाभ्यासस्य । सम्मतं चैतन्मीमांसकानामपि भूयसामनुग्रहायाल्पबाधं वदताम् । एवमसकृदावृत्तस्याप्येकस्य पदस्य वाक्यस्य वा संभवदनेकार्थस्य स्वारसिकप्राप्तार्थत्यागेनावैयर्थ्यायाप्राप्तार्थपरताया आवश्य कत्वादभ्यासादप्यपूर्वतायाः प्राबल्यम् । यथा 'इतरव्यपदेशाद्धिताकरणादि दोषप्रसक्ति' रित्यत्र—

'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।

जीवे तु लयमृच्छन्ती'तिजीवशब्दाभ्यासाद्ब्रह्मपरत्वेऽपूर्वतायाः ।
तत्र हि प्रत्यक्षानुगृहीतश्रुत्या पूर्वपक्षः । उक्तं चैतरेयभाष्ये 'तदस्य प्रथमं जन्म तदस्य द्वितीयं जन्म तदस्य तृतीयं जन्मे'ति जीवे प्रसिद्धजन्मशब्दाभ्यासेऽप्यपूर्वतया ब्रह्मप्रादुर्भावविषयत्वम् । संमतं चैतन्मीमांसकानामपि 'दध्ना जुहोति पयसा जुहोति ऋजुमाघारयति संततमाघारयती'त्यादौ जुहोत्यादेरावृत्तावप्यप्राप्तदध्यादावेवतात्पर्यं तथा प्राप्तार्थार्थवादानामप्राप्तार्थविध्यनुसरणं वदताम् ॥

एवं फलार्थत्वात्सर्वस्य लोकेऽप्यप्राप्तेऽपि निष्फले तात्पर्यादर्शनात् प्राप्तेऽपि सफले तात्पर्यदर्शनाच्चापूर्वतातोपि फलस्य प्राबल्यम् । यथा 'असंभवस्तु सतोऽनुपपत्ते'रित्यत्र 'असद्वा इदमग्र आसीत् ततो वै सदजायते'त्यस्मात्सतो ब्रह्मणोऽसतः सकाशादुत्पत्तिरूपदोषप्रतिपादकादपूर्वतायुक्ताद्वाक्यात् 'सदेव सोम्येदमग्र आसी'दिति ब्रह्मणोऽनुत्पत्तिप्रतिपादकस्य सफलस्य वाक्यस्य । उक्तं ह्यनुव्याख्याने —

'प्रीत्या मोक्षफलत्वाच्च तात्पर्यं नैव दूषणे'

इति । उक्तं च विष्णुतत्त्वनिर्णये 'घातयन्ति हि राजानो राजाहमिति वदन्तम् । ददति च सर्वमभिप्रेतं गुणोत्कर्षं वदत' इत्यादिनाऽपूर्वतायुक्तादप्यभेदवाक्यात्सफलभेदवाक्यस्य प्राबल्यम् । संमतं चैतन्मीमांसकानामपि अङ्गप्रधानवाक्ययोरपूर्वतायां सत्यामपि निष्फलस्य सफलाङ्गत्वं तथा निष्फलाङ्गवाक्ये फलवत्प्रधानवाक्यानुसरणम् । तथा 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः'इत्यादेरिव 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यस्यैवोत्पत्त्यादिपरत्वसंभवे 'अग्निहोत्रं जुहोती'त्यस्य कर्मान्तरविधिपरत्वेऽपूर्वतायां संभवन्त्यामपि फलाभावप्रसङ्गेनाधिकारवाक्यबोधितफलयुक्तकर्मोत्पत्तिमात्रपरत्वं च वदताम् ॥

एवं फलमात्रात्करणाकरणयोरिष्टानिष्टकथनादिरूपार्थवादस्य प्राबल्यं यथा उत्क्रमिष्यत एवं भावादित्यौडुलोमिः इत्यत्र काम्यकर्मसु श्रुतात्पश्वादिफलात् 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि प्लवा ह्येते

अदृढा यज्ञरूपा:' इत्यादावर्थवादस्य । न हि कर्मणा प्लवा इत्यादिना निन्दित काम्यरूपेण कर्तव्यता । किंतु 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचने'त्याद्य नुसारेण 'सर्वापेक्षा च यज्ञादिश्रुते'रिति वक्ष्यमाणन्यायेन 'कर्मणा ज्ञान' मित्यादिना स्तुतज्ञानसाधनरूपेणैव । समतं चैतन्मीमांसकानामपि निवीतवाक्य स्यानुष्ठानसौकर्यवत्त्वेन सप्रयोजनत्वेऽपि 'देवलक्ष्यमेव तत्कुरुत' इतिसार्थवादको पवीतवाक्यानुसारं वदताम् । एवं सार्थवादस्याप्यनुपपन्नेऽर्थे तात्पर्यादर्शनादु पपन्ने च तद्दर्शनादुपपत्तेः सर्वमूलत्वादर्थवादादपि प्राबल्यम् । यथा 'पृथगु-पदेशा'दित्यत्र सार्थवादाभेदश्रुतितो 'भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसघो ह्यपूर्णः' इति सोपपत्तिकभेदश्रुतेः । अत एव तत्र भाष्यं 'सोपप त्तिकक्षौशिकश्रुते'रिति । उक्तं चानुव्याख्याने —

'युक्तोऽयुक्तश्च यत्रार्थ आगमस्य प्रतीयते । स्यात्तत्र युक्त एवार्थ' इति ॥

संमतं चैतन्मीमांसकानामपि 'न ह्यशङ्कनीयमर्थं विधिरपि विदधाती'ति वदताम् । न च तात्पर्यनिर्णयाय श्रुत्युक्ताया अनुक्ताया वापपत्तेरपेक्षायामन पेक्षत्वरूपप्रामाण्यहानिः । किंतु निर्णीते तस्मिन्नर्थनिर्णयाय तदपेक्षायाम् । अन्यथा तात्पर्यनिश्चयाय विचारमपेक्षमाणो वेदोऽप्रमाणं स्यात् । हेतुवन्नि गदाधिकरणे 'तेन ह्यन्नं क्रियत' इत्यत्राप्रामाण्यापत्त्या हेतुत्वत्यागो न तावद्भट्ट रीत्या । तन्मते तेन ह्यन्नं क्रियत इत्यादेः प्रामाण्यमुपेत्य हेतुपरत्वमित्येव पूर्वपक्षकरणात् सिद्धान्ते च दर्वीपिठरादिनाऽऽनुमानिकेन प्रत्यक्षस्य शूर्पस्य विकल्पादिप्रसङ्गाच्छूर्पस्य होमसाधनतायामन्नकरणत्वस्य हेतुत्वत्यागो न त्व प्रामाण्यापत्तिभयात् । नापि निबन्धनरीत्या 'न ह्यत्रानूयाजा इज्यंत' इत्यादौ यत्र यत्रानुयाजाभावस्तत्र तत्राष्टगृहीताभाव इति व्याप्तेः सत्त्वेनानुयाजाभाव स्याष्टगृहीताभावे हेतुत्वेनान्वयोपगमात् । रक्तपटन्यायेन च स्तुताविव हेता वप्याकांक्षोत्थापनात । हेतुत्वोपपादकव्याप्त्यादेश्चालौकिकसुखरूपस्वर्गोपपादक देहादेरिव शब्देनैवाक्षेपान्मानान्तरानपेक्षत्वोपपत्तेस्तद्रीतेरेवायुक्तत्वात् ॥

एतेनार्थवादाधिकरणे निबन्धने विवरणे च 'वायुर्वै क्षेपिष्ठे'त्याद्यर्थ वादाना हेतुत्वेनान्वयादप्रामाण्ये प्राप्ते सिद्धान्ते प्रामाण्याय हेतुत्वत्यागोक्ते

स्तद्विरोध इति निरस्तम् । तात्पर्यनिर्णयाय हेत्वपेक्षायामप्रामाण्यानापत्तेः । अर्थनिर्णयाय तदपेक्षायास्त्वन्मतेऽप्यभावात् । तस्मादुपक्रमादौ परबलीयस्त्वं श्रुत्यादौ तु पूर्वबलीयस्त्वम् । तदुक्तमनुव्याख्याने —

'उपक्रमादिलिंगाना बलियो ह्युत्तरोत्तरम् ।
श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णया'दिति ॥

यत्रैकस्यार्थस्योपक्रममात्रमुपसंहारमात्र वा तत्र तन्मात्रादुपक्रान्नादिमात्रेऽर्थे तात्पर्यम् । अत एव प्रमाणलक्षणे भगवत्पादैः 'उपक्रमोपसंहारतदैकरूप्याभ्यामापूर्वताफलार्थवादाश्चे'ति तदैकरूप्यं पृथगुक्तम् । अत्र तूपक्रमोपसंहारावित्यत्र प्रत्येकविवक्षया विशकलितौ द्वाविव समुदायविवक्षया तदैकरूप्यमपि विवक्षितम् । अत्र टीकाया तदैकरूप्यस्य पृथगनुक्तिस्त्वन्यत्रोक्तत्वात् ॥

यद्वात्रोपक्रमादेर्बलाबलयोर्निरूप्यमाणत्वात् यत्रैकैकं तत्र सन्निपातस्यैवाभावात् यत्र चैकस्मिन्वाक्य एकस्मिन्नर्थ उभयसन्निपातस्तत्र विरोधस्यैवाभावात् यत्र च विरुद्धार्थवाक्ययोरेकत्रोपक्रमो वाक्यान्तरे चोपसंहारस्तत्र बलाबलयोरभावात् । यत्र चैकस्मिन्महावाक्ये भिन्नयोरर्थयोरुभयसन्निपातस्तत्रोपसंहारानुसारेणैकरूप्यात्तात्पर्यनिश्चयेनोपसंहारप्राबल्योक्तावर्थात्तदैकरूप्यस्याप्युक्तत्वादत्रपृथगनुक्तिः । प्रमाणलक्षणे तूपक्रममात्रादिकमपि क्वचिदुपक्रांतादौ तात्पर्यनिर्णायकमिति निदर्शयितुं पृथगुक्तिः । उपसंहारमात्रयुक्तस्य चोभयैकरूप्यवद्वाक्यानुरोधे नास्वारस्यादुपसंहारादैकरूप्यस्य बलवत्त्वम् । यद्वोपक्रमस्वारस्यादुपसंहारस्वारस्यस्य बलीयस्त्ववदुपसंहारमात्रस्वारस्यादुभयस्वारस्यस्य बलीयस्त्वम् । एतच्चोपक्रमादिकं स्वार्थे शब्दात्मकमपि इदमेतत्परमबाधे सत्येतदुपक्रमत्वादित्यादिरूपेण महावाक्यतात्पर्ये लिङ्गं च । उपपत्तिस्तु स्वार्थेऽपि लिङ्गरूपा, तात्पर्येऽपि । अयं तात्पर्यविषयः उपपन्नत्वादिति लिङ्गरूपेति पृथगुक्ता । तत्र विरोधे दुर्बलं बाध्यम् । उपक्रमादिद्वयस्य समस्य विरोधे सावकाशं बाध्यम् । उपजीवकत्वादिना स्वभावदुर्बलेनापि निरवकाशेनोपजीव्यत्वादिना स्वभावप्रबलस्यापि सावकाशस्य बाधः । एवमेकेन निरवकाशेन सावकाशानेकबाधः । सावकाशत्वं च न लक्षणादिनाऽर्थांतरपरताकल्पनार्हत्वम् । येनोपक्रमादेर्दुर्बलस्यापि प्रमाणत्वेन सावकाशत्वनियमात्तदेव बाध्यत्वे तन्त्रं न तु स्वभावदुर्बलत्वं नामास्तीति स्यात् । किंतु स्वत एवार्थान्तरवाचित्वम् । यथा

चैवंविधसावकाशत्वशून्यस्यापि स्वभावदुर्बलस्य स्वभावबलवद्विरोधेऽर्थांतरकल्पना एवं स्वभावप्रबलस्य निरवकाशत्वनियमाभावोऽप्यूह्यः । इयं च बाधव्यवस्था न केवलमुपक्रमादौ । किंतु श्रुतिलिङ्गादौ च द्रष्टव्या । श्रुत्यादिकमपि श्रुत्याद्यविरुद्धे लिङ्गादौ प्रामाण्यादिह ग्राह्यमिति । (श्रुत्यादिक्रमेऽपि श्रुत्याद्य विरुद्धे लिङ्गादौ प्रामाण्यादि ग्राह्यमिति ) ॥

सूत्राक्षरार्थस्तु — तत्तु ब्रह्मैव शास्त्रयोनि सावकाशत्वनिरवकाशत्वादिना विचारितस्वरूपसम्यक्त्वयुक्तादन्वीयतेनेनेत्यन्वयशब्दवाच्यादुपपत्त्यादेर्लिङ्गादिति । सुधाया तु न केवलमुपपत्त्यादिकं समन्वयशब्दार्थः । किंतु तद्धेतुकशास्त्रजन्यप्रमागोचरत्वरूपशास्त्रयोनित्वे हेतुभूतः सर्वशास्त्रस्य सम्यग्वचन वृत्त्या तत्परत्वरूपसंबन्धोऽपीत्युक्तम् ॥

अत्र परैर्वेदान्ता ब्रह्मणि न प्रमाणं सिद्धवस्तुबोधने प्रवृत्त्याद्यभावेन फलाभावात्सापेक्षत्वप्रसङ्गाच्चेति प्राप्ते 'द्विविधं हीप्सितम् । किंचिदप्राप्तम् । यथा ग्रामादि । किंचिच्च प्राप्तमपि विभ्रमवशादप्राप्तमित्यवगतम् । यथा कण्ठमण्यादिकम् । एवं जिहासितं द्विविधम् । किंचिदहीनं जिहासति । यथा वलयित चरणं फणिनम् । किंचिच्च हीनमेव । यथा चरणाभरणनूपुरे आरोपितं फणिनम् । तत्र ब्रह्मात्मैक्यज्ञानात्प्राप्तब्रह्मप्राप्तिः कल्पितत्वेन नित्यहीनसंसारहानिश्च संभवतीति फलवत्त्वम् । सिद्धस्यापि ब्रह्मणो मानान्तरागोचरत्वान्न सापेक्षत्वं चे'ति सिद्धान्तयित्वा 'समन्वयश्च लक्षणयाऽखण्डार्थपरत्वम् । ततश्च तद्ब्रह्म शास्त्रप्रतिपाद्यं समन्वयादिति सूत्रार्थ' इत्युक्तम् । तत्र पूर्वपक्षो निर्दलः । निष्प्रयोजनत्वशङ्कायास्त्वन्मते आद्यसूत्र एव जिज्ञासाशब्देन परिहृतत्वात् । लौकिकार्थपरवाक्येऽपि सापेक्षत्वदर्शनेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वाच्च। सिद्धान्तोऽप्ययुक्तः । तथा हि ॥

स्वप्रभत्वादसंदिग्धेऽवाच्यत्वात् श्रुत्यगोचरे ।
निर्विशेषे च चिन्मात्रे कथं श्रुतिसमन्वयः ॥

एवं सन्दिग्धस्यैव विषयत्वात् सामान्यज्ञानविशेषाज्ञाननिबन्धनस्य च सन्देहस्य निर्विशेषेऽसंभवात् पूर्वपक्षसिद्धान्तयोश्च सन्देहकोट्यन्यतरकोट्य

वलम्बित्वात् फलस्य चैककोटिनिर्णयाभावात्त्वात् निर्विशेषात्मनि विषयसंशयपूर्व पक्षसिद्धान्तप्रयोजनाख्यपञ्चकरूपाधिकरणासंभवो द्रष्टव्य ॥

अपि च—

आद्यसूत्रेऽहमर्थे हि प्रसिद्धिः प्रतिपादिता ।
जिज्ञासार्थं द्वितीये हि जगज्जन्मादिहेतुता ॥ १ ॥
अविद्यमानाऽहमर्थे लक्षणत्वेन कीर्तिता ।
ईश्वरस्य तृतीये तु निर्विशेषप्रामाणता ॥ २ ॥
शास्त्रस्योक्ता चतुर्थे च तस्मिन्नेव समन्वयः ।
प्रतिज्ञातोऽनरित्यादौ सविशेषं तु कथ्यते ॥ ३ ॥
ब्रह्मेति मायिना पक्षस्तत्र किं केन संगतं ।
तत्वविद्वेषमात्रेण श्रुतिसूत्रे कदर्थिते ॥ ४ ॥

किंच कण्ठमण्युपदेशस्य प्राप्तमणिप्राप्तिर्न फलम् । किंतु प्राप्तिज्ञान जन्यसुखस्य । वस्तुतः प्रागप्राप्तस्य प्राप्तिः मण्यप्राप्तिभ्रमादिजन्यस्य दुःखस्य वस्तुनः प्रागनिवृत्तस्य निवृत्तिर्वा फलम् । एवं चरणाभरणमिदं न सर्प इत्युपदेश स्यापि न नित्यनिवृत्तसर्पनिवृत्तिः फलम् । किन्त्वाभरणत्वज्ञानजन्यसुखस्य वस्तुनः प्रागप्राप्तस्य प्राप्तिः सर्पभ्रमजन्यदुःखस्य वस्तुनः प्रागनिवृत्तस्य निवृत्तिर्वा । न ह्युपदेशेन मणिः प्राप्तः सर्पो निवृत्त इत्यनुभवः । किंतु प्राप्तिर्जाता भ्रमो निवृत्त इति । न च प्रकृते प्राप्तस्वरूपसुखादन्यत्प्राप्यं सुखं नित्यनिवृत्ताविद्याभ्रम दुःखादेरन्यन्निवर्त्यं वास्ति । येन सप्रयोजनता स्यात् । किंच पूर्ववादिना फला भावादिना तात्पर्ये आक्षिप्ते सिद्धान्तसूत्रे फलादिकं तात्पर्यं चानुपपाद्य प्रामाण्ये तात्पर्यं हेतूकर्तुमयुक्तम् । लक्षणाया अमुख्यत्वेन सौत्रसंशब्दार्थत्वायोगश्च । तदुक्तमनुव्याख्याने —

'कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम् ।
योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वय' इति ॥

केचित्तु फलाभावापातात्सिद्धपरत्वं नेति प्राप्ते, पुत्रस्ते जात इत्यादौ सिद्धपरत्वेऽपि फलदर्शनान्न दोष इति सिद्धांतयित्वा, 'समन्वयश्च पुरुषा-

र्थस्य ब्रह्मणोऽभिधेयत्वेन संबंधः । तथा च तच्छास्त्रयोनित्वं समन्वया' दिति सूत्रार्थः इत्याहुः । तन्न । फलसद्भावेन सिद्धपरसर्ववाक्यविचारोपपादकस्यास्य सिद्धे व्युत्पत्तिप्रतिपादनेन तदुपपादकाद्यसूत्रानन्तर्यस्यैव युक्तत्वात् । त्वन्मते हि जन्मादिशास्त्रयोनिसूत्रे कारणवाक्यस्यैव विचारोपपादके । किंच । समन्वयाध्याये या तात्पर्यलिङ्गैर्ब्रह्मपरतोपपादयिष्यते सैवेह सूत्रे समन्वयशब्देन निर्देष्टव्या । यद्यपीह सूत्रे मन्मते शास्त्रयोनीत्यनुषञ्जनीयम् । त्वन्मते तु न । तथापि मन्मते तच्छब्देन प्रकृतब्रह्म परामर्शात्तस्यानन्दमयादिष्वनुषक्तस्याऽऽध्यायसमाप्ति विधेयसमर्पकतयान्वयः । त्वन्मते तु शास्त्रयोनित्वपरामर्शादुत्तरसूत्रेषु ब्रह्मशब्दोऽध्याहार्यः स्यात् ॥

यच्चोक्तं चतुःसूत्र्याः शास्त्रारंभमात्रकत्वादुपोद्घातत्वम् । यथोक्तं —
'व्युत्पत्त्यभावः प्रविपत्तिदौःस्थ्यमन्येन सिद्धत्वमथाफलत्वम् ॥
एतानि वै सूत्रचतुष्टयेनानारंभमूलानि निराचकारे'ति ॥

तदपि न । जन्मादिसूत्रे लक्षणोक्त्या शास्त्रयोनिसूत्रादौ च प्रमाणाद्युक्त्या ब्रह्मणो विचार्यमाणत्वेनोपोद्घातत्वायोगात् ॥

टीकाक्षरार्थस्तु — मुख्यस्येति । अप्राप्तस्येत्यर्थः । भगवद्वाक्ये इत्यहमित्यत्रत्यस्येतिशब्दस्य हृदयमित्यनेनान्वय इत्याह — इत्यभिप्रायमिति ॥

॥ इति समन्वयाधिकरणम् ॥

## [ ईक्षत्यधिकरणम् ]

### 5 – ॐ ईक्षतेर्नाशब्दम् ॐ ॥ १-१-५ ॥

आद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तकगुणपूर्तिं लक्षणत्वेन सूचयित्वा द्वितीये तस्य गुणपूर्तिनाचितासिद्धये जीवपरतानिरासाय कारणतां जिज्ञास्यब्रह्म लक्षणत्वेनोक्त्वा तृतीये पूर्तिकारणतयोरतियाप्तिपरिहाराय तत्र शास्त्रं प्रमाणीकृत्य चतुर्थे तयोर्विष्णवेकनिष्ठत्वाय शास्त्रस्यान्यपरता निषिध्य सर्वशास्त्रस्थसर्वे

शब्दप्रवृत्तिनिमित्तसर्वगुणपूर्तिसिद्धये वचनवृत्त्या सर्वशास्त्रतात्पर्यविषयतायां चोक्ताया संशब्दार्थस्य वाच्यत्वस्य कात्स्नर्यस्य चेहाक्षिप्य समाधानादनन्तर सङ्गतिः। सङ्गत्यादिटीकापि समन्वयसूत्रसङ्गत्यादिपरत्वेन योज्या ॥

अत एव गतिसामान्यादित्यस्य संशब्दार्थसमर्थनरूपतयैक्यादेतदधिकरणान्तर्भावः। अन्यथा गतिसूत्रस्य 'अनन्ता वै वेदा' इतिश्रुतेर्वेदानामनन्तत्वेन शाखान्तरेऽन्यथात्वे शङ्किते 'सर्वे वेदा युक्तय'इति श्रुत्या प्रसिद्धशाखादृष्टान्तेनान्यत्रापि तदनुमानात् शाखान्तरस्यापि प्रमाणत्वाच्च नैतच्छाखाविरोध इत्येवं परत्वात् सूत्रान्तराणां तु वाच्यत्वसाधकत्वादधिकरणभेदः स्यात्। युक्ता च शाखान्तरे सत्त्वादिगुणयुक्तेऽप्यात्मशब्दो मुख्यतयोच्यताम्। तज्ज्ञानान्मोक्षादिश्चोच्यताम्। अतश्च नात्मशब्दादिना निर्गुणस्येक्षणमिति शङ्कानिरासकस्य गतिसामान्यस्य ब्रह्मकारणतादिरूपेऽर्थान्तरेऽपि श्रुतीनां नान्योन्यं विरोध इति सूचकत्वेऽपि समन्वयहेतुवाच्यत्वसाधकेक्षत्यधिकरणान्तर्गतिः। अत एव भाष्यकृता गतिसूत्रं 'न च कासुचिच्छाखास्वन्यथोच्यत' इति सामान्यपरतयैव व्याख्यातम्। सूत्रकृता च वाच्यत्वसाधकात् 'श्रुतत्वाच्चे'त्यस्मात्प्रागेव तन्निवेशितम् ॥

अत्र ब्रह्मणि समन्वयो न युक्तो युक्तो वेति चिन्ता। तदर्थं शुद्धं ब्रह्मावाच्यं वाच्यं वेति। तदर्थमवाच्यत्वश्रुतिर्वाच्यत्वाभावाभिप्रायोताप्रसिद्धत्वाभावाभिप्रायेति। तदर्थं वाच्यत्वाभावाभिप्रायत्वे बाधकं नास्त्युतास्तीति। तदर्थं शुद्धं ब्रह्मानीक्षणीयमुतेक्षणीयमिति। तदर्थं 'तमेवैकं जानथ आत्मानं आत्मन्येवात्मानं पश्ये'दित्यादावीक्षणीयत्वेन श्रुत आत्मा सगुणो निर्गुणो वेति। तदर्थमात्मशब्दः किं गौणात्मनि मुख्यः किं वा निर्गुण एवेति। तदर्थं 'यस्यानुवित्त' इत्यादि श्रुत्युक्तमात्मनिष्ठस्य मोक्षोपदेशादिकं गौणात्मनि युक्तमुत नेति। यदि मोक्षोपदेशादिकं गौणात्मनि युक्तं तदाऽऽत्मशब्दस्य गौणात्मनि मुख्यत्वे बाधकाभावात् 'तमेवैक'मित्यादावीक्षणीयत्वेनोक्तो गौण एवेत्यवाच्यत्वबाधकमीक्षणीयत्वं न निर्गुणस्येति न तस्य वाच्यत्वसिद्धिरिति पूर्वपक्षे फलम्। यदि तु न युक्तं तदाऽऽत्मशब्दस्य गौणात्मनि मुख्यत्वे बाध

सद्भावा 'त्वमेवैक' मित्यादावुक्तमवाच्यत्वबाधकमीक्षणीयत्वं निर्गुणस्यैवेति तस्य वाच्यत्वसिद्धिरिति सिद्धान्ते फलम् ॥

**पूर्वपक्षस्तु**— न ब्रह्मणि समन्वयो युक्तः । 'यतो वाचो निवर्तन्त' इत्यादिश्रुतिभिस्तस्यावाच्यत्वात् । ननु 'पुरिशयं पुरुषमीक्षत' इति ब्रह्मण ईक्षणीयत्वं श्रुतम् । तच्च न शब्देतरेण । ब्रह्मण औपनिषदत्वात् । शब्देनेक्षणं च वाच्यत्वं विना न युक्तमिति चेन्न । तत्रेक्षणीयत्वेनोक्तो हि सगुण आत्मा । स च वाच्य एव । यश्चावाच्यः शुद्धो न तस्येक्षणीयत्वम् । 'यत्तदद्रेश्य' मित्यादिश्रुतिभिरग्राह्यदृश्यत्वात् । अस्तु वा शुद्धस्येक्षणीयत्वम् । तथापि न वाच्यत्वसिद्धिः । लक्षणया शब्दबोध्यत्वात् । नन्ववाच्यत्वे लक्षणापि न स्यात् । सर्वशब्दावाच्यस्य लक्षणायोगात् । तथा हि । किमस्य शब्दस्य लक्ष्यमिति प्रश्नेऽवाच्ये लक्षकं पदांतरमेव प्रयोक्तव्यम् । तत्रापि किमस्य लक्ष्यमिति प्रश्नापर्यवसानादनवस्थेति चेन्न । वाचकपदप्रयोगेऽपि किमस्य वाच्यमिति प्रश्नापर्यवसानेनानवस्थापातादिति ॥

**सिद्धान्तस्तु** — न तावच्छुद्धस्यात्मनो ज्ञेयत्वमेव नेति युक्तम् । सूत्र आत्मशब्दतन्निष्ठमोक्षोपदेशादिभिर्ज्ञेयस्य शुद्धत्वोपपादनात् । त्वयापिशुद्धात्मज्ञानेनैव मोक्ष इति स्वीकृतत्वाच्च । नापि तस्य ज्ञेयत्वेऽपि लक्षणयैव तदिति युक्तम् । वाच्यसंबद्धतया ज्ञातस्यैव लक्ष्यत्वात् । औपनिषदस्य चाशब्देनाज्ञानात् स्वप्रकाशतया नित्यसिद्धौ च शास्त्रवैयर्थ्यात् । अवाच्ये च शब्दस्य लक्षकस्यैव वक्तव्यत्वात्तत्रापि वाच्यसंबंधितया ज्ञानस्यापेक्षितत्वात्तदर्थं लक्षकांतरप्रयोगेऽनवस्थानात् । टीकायामपीयमेवानवस्था विवक्षिता । न च वाचकशब्दस्यापि गृहीतसंबंधस्यैव बोधकत्वात् संबंधज्ञानस्य च संबंधिज्ञानाधीनत्वात् संबंधिनश्च ब्रह्मण औपनिषदत्वाच्छब्दांतरेणैव तद्बोध इत्यनवस्था स्यादिति शंक्यम् । यौगिकानां पदानां वाक्यतुल्यतया संगतिग्रहणानपेक्षत्वात् । यथोक्तं 'श्रोत्रियंश्छंदोऽधीते । वाक्यार्थे पदप्रयोग' इति । न च शुद्धात्मनो वृत्तिव्याप्यत्वमेव । न त्वीक्षणकर्मत्वमिति वाच्यम् । वृत्तिव्याप्यत्वेनैव वाच्यत्वसिद्धेः ॥

किंच निर्गुणावाच्यादिपदाना सगुणं न वाच्यमिति शुद्धस्यैव तद्वाच्यत्वसिद्धिः । विस्तृतं चैतदन्यत्र । अवाच्यत्वाज्ञेयत्वादिश्रुतिस्त्वप्रसिद्धत्वाभिप्रायेति भाष्य एवोक्तम् । अन्यथा 'अशब्द'मित्यादिश्रुतावशब्दमित्यादिशब्दवाच्यताऽपि निषिध्यते चेद्गङ्गाशब्दावाच्यस्य गङ्गात्वाभाववदशब्दशब्दावाच्यस्याशब्दत्वाभावः स्यात् । न निषिध्यते चेदशब्दमित्यादिशब्दवाच्यत्वं स्यात् । तस्मात् 'न चैतद्विद्मो वय ब्राह्मणा' इत्यादाविवेहाप्यज्ञानादिवचन दुर्ज्ञानत्वाद्यभिप्रायम् ॥ तदुक्तमनुव्याख्याने —

'अद्भुतत्वादवाच्यं तदतर्क्योऽज्ञेयमेव च ।
अनन्तगुणपूर्णत्वादित्यूदे पैङ्गिना श्रुति' रिति ॥

यद्यपि वाच्यत्वे 'सर्वे वेदा यत्पदमामनन्ति अथ कस्मादुच्यते ब्रह्मेति तत्सत्यमित्याचक्षते यमिंद्रमाहुर्वरुणं यमाहुः इत्याचक्षत एतमेव सन्तं तस्मादुच्यते परं ब्रह्मे' त्यादिका श्रुतिः 'वचसा वाच्यमुत्तमम् । परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः' इत्यादिका स्मृतिश्चास्ति । तथाप्यवाच्यत्वेऽपि श्रुतेः सत्त्वाद्वाच्यत्वश्रुतिर्विशिष्टविषया न तु शुद्धविषयेति शङ्कोदयाच्च । न श्रुत्यादिमात्रेण वाच्यत्वनिश्चय इति सूत्रे प्रसिद्धश्रुत्यनुग्राहकन्याय एवोक्तः । अत एव वाच्यत्वस्य श्रुतत्वादित्यर्थस्येक्षतिसूत्र एव विवक्षितत्वात् 'श्रुतत्वाच्चे'ति सूत्रं तत्परतया भाष्ये न व्याख्यातम् । न च 'तस्मादुच्यते परं ब्रह्मे' त्यादिश्रुतिर्लक्षणया ब्रह्ममात्रपरेति न तया वाच्यत्वसिद्धिरिति शंक्यम् । अन्योन्याश्रयात् । 'यतो वाच' इत्यादेरपि लक्षणया स्वरूपमात्रपरत्वेन तयाप्यवाच्यत्वासिद्ध्यापत्तेश्च । तस्मादनुभवादिविरुद्धं सर्वशब्दावाच्यत्वम् । तदुक्तं न्यायविवरणे 'सर्वे वेदा यत्पदमामनन्ती'त्यादिश्रुतिसहितानुभवस्य बलवत्त्वा'दिति ॥

अत्राद्यसूत्रेऽनुषक्तेन तदित्यनेन सामानाधिकरण्यायाशब्दमिति नपुंसकत्वेऽपि द्वितीयसूत्रे 'आत्मन्येवात्मानं पश्ये'दित्यादावात्मा न गौण आत्मशब्दादित्यात्मशब्दसामनाधिकरण्याय गौणश्चेदिति पुँल्लिगनिर्देशः । प्रत्युत परस्यैव 'ईक्षतेरिति न धातुनिर्देशः । किंतु तदर्थस्य । तेन यः सर्वज्ञ इत्या-

ह्युदाहर्तव्य' मिति वदतो गौणश्चेदिति पुँल्लिंगं क्लिष्टम् । ईक्षणस्य पुल्लिंगनिर्देशात् । 'स ईक्षाचक्र' इति परोदाहृते स्त्रीलिंगनिर्देशाच्च ॥

यद्यप्यत्र 'स एतस्मा'दिति यत्र वाक्य ईक्षतिस्तत्रात्मशब्दो नास्ति । एवमात्मन्येवात्मानं पश्येदित्यत्रात्मशब्दस्य सद्भावेऽपि तन्निष्ठस्य मोक्षोपदेशादिकं नास्ति । ततश्च 'गौणश्चेन्नात्मशब्दा'दित्यादि व्यधिकरणमिव भाति । तथापीक्षते'रित्यनेन शब्दमात्रस्यासाधकतया ज्ञानकर्मत्वस्यैव विवक्षणीयत्वात् । तस्य च 'स एतस्मा'दिति वाक्य इवात्मन्येवेत्यादिवाक्येष्वपि सत्त्वेन तेषामपि भाष्यकृतेक्षतिसूत्र उदाहृतत्वात् तेषा च वाक्यनामेकार्थत्वादात्मशब्दादिमत एकस्य वाक्यस्य निर्गुणपरत्वेऽन्यस्यापि तत्परताया अपरिहार्यत्वादेकस्य निर्गुण परत्वमात्रेण तस्य वाच्यत्वसिद्धेश्च न वैयधिकरण्यम् । यद्यपि 'तमेवैकं जानथे'तिवाक्ये ईक्षणीयत्वात्मशब्दतन्निष्ठमोक्षोपदेशहेयत्वावचनानि सन्तीति तदेव वाक्यमाद्यसूत्रचतुष्टय उदाहर्तुं शक्यम् । स्वाप्ययश्रुतत्वयोस्तु तन्निष्ठ मोक्षोपदेशहेयत्वावचनयोरिवात्मशब्दस्य गौणात्मपरत्वनिरासकत्वाभावात् स्वातं त्र्येणैव च निर्गुणस्य वाच्यत्वे हेतुत्वात्तमेवैकमिति वाक्ये तयोरभावेऽपि न दोष । तथापि सौत्र आत्मशब्दः 'स एतस्मा'दित्यादिवाक्यस्थपुरुषादि शब्दानां परात्परत्वादिलिङ्गाना चोपलक्षकः । तथा ईक्षणीयत्वं बहुश्रुतिसिद्ध त्वान्नापलापार्हम् । तथा स एतस्मादिति वाक्ये सूत्रोपात्तेक्षतिधात्वनुगतिरप्यस्तीत्यादि दर्शयितुं भाष्ये स एतस्मादित्यादिवाक्यान्यप्युदाहृतानि । न च परेषामिवास्माकमिदमधिकरणं वाक्यविशेषसमन्वयार्थम् । किंतु वाच्यत्वसाधनार्थम् । न चैकप्रकरणस्थैरेव वाच्यत्वं साध्यमित्यत्र नियामकमस्ति । परैरपि प्रकृत्यधिकरणे नानाप्रकरणस्थैः प्रतिज्ञादृष्टान्तानुपरोधसाक्षादुभयाम्नानात्मकृत्यादिभिरुपादानत्वसाधनात् । इहापि परोदाहृते सदेवेत्यादिवाक्य ईक्षतिधात्वा त्मशब्दतन्निष्ठमोक्षोपदेशहेयत्वावचनस्वाप्ययाना भावेऽपि गतिसामान्यश्रुतत्व योरभावाच्च । यः सर्वज्ञ इत्यादौ परोदाहृते स्वाप्ययादेरप्यभवाच्च । यद्यपि तन्निष्ठस्येत्यादिसूत्रद्वयमपि गौणश्चेदितिवदीक्षणीयस्य सगुणात्मत्वं नेत्यत्रापि हेतुः सम्भवति । तथाप्यात्मशब्दो गौणात्मपरोऽस्त्विति शङ्कानिरासकस्यान्यस्या-

यभावात्तन्निष्ठस्येत्यत्र चशब्दाभावाच्चात्मशब्दस्यान्यपरत्वशङ्कानिरासकतयापि भाष्यटीकयोर्व्याख्यातम् ॥

सूत्रक्रमस्तु — आद्यसूत्रे साक्षाद्वाच्यत्वहेतोरीक्षणीयत्वस्योक्तिः । द्वितीये तस्य व्यधिकरणासिद्ध्युद्धारः । तृतीयचतुर्थयोस्तु तदुद्धारकस्यान्यथासिद्धिशङ्कानिरासः । तत्रापि सगुणात्मनिष्ठस्यापि परंपरया मोक्षो युक्त इति शङ्काया अपि तन्नैवैकमिति साक्षाधारणाहेयत्ववचनं न स्यादिति वदता हेयत्वेत्यनेन निरासादभावरूपत्वाच्च हेयत्वावचनस्य तन्निष्ठेत्येतदानन्तर्यम् । स्वाप्ययस्य तु 'द्युक्तत्वाच्च निर्गुणो वाच्य इति बहिरेवोक्ते कुतोऽयं निर्गुण इति शङ्कापरिहारात्मकत्वात्तत्र चशब्दाभाव' इति टीकोक्तरीत्या वाच्यत्वे परंपरया हेतुत्वात् तथा 'आत्मानं विलापयती'त्यात्मनो नाशितत्वेन हेयत्ववचनाच्चावचनमसिद्धमिति शङ्काया अपि, नात्र नाश उच्यते किन्त्वेकीभाव इति वदता स्वाप्ययादित्यनेन निरासात्पंचमता । तत्र चशब्दाभावे टीकायामेव हेतुरुक्तः । षष्ठे तु गौणात्मन्यपि स्वाप्ययादिः शास्त्रान्तर उच्यतामिति शङ्कानिरासः । श्रुतत्वाच्चेत्यत्र तु गतिसामान्यस्य श्रुतत्वादित्यस्यापि विवक्षितत्वात्तस्यान्त्यतेति ॥

अन्ये तु 'सदेव सोम्येदमग्र आसी'दित्यादिकारणवाक्यं सांख्यादिस्मृतिसिद्धाचेतनकारणानुवादीति प्राप्ते ईक्षणेन चेतनकारणताप्रापकमिति सिद्धान्त इत्याहुः । तत्र किं विशिष्टस्य परिणामित्वमेतद्वाक्यबोध्यमिति सिद्धान्त्यते, किं वा कर्तृत्वं बोध्यमिति । यद्वा शुद्धस्य भ्रमाधिष्ठानत्वं बोध्यमिति । नाद्यद्वितीयौ । विशेषे सदेवेत्यादिवाक्योक्तसत्त्वाद्ययोगात् । पूर्वसूत्रेऽखण्डे समन्वयस्यैव प्रतिज्ञातत्वेनात्राखण्डस्यैव वक्तव्यत्वाच्च । द्वितीये वैयधिकरण्यं च । न हि प्रधानं परिणामीति प्राप्ते ब्रह्म कर्त्रिति सिद्धान्तो युक्तः । अत एव न तृतीयः । प्रधानं परिणामीति प्राप्ते ब्रह्माधिष्ठानमित्यस्य व्यधिकरणत्वात् । कथंचिद्वैयधिकरण्येऽपि 'तदैक्षत सेयं देवतैक्षत नामरूपे व्याकरो'दित्यादिकमयुक्तं स्यात् । तस्य लक्षणयाऽचिन्मात्रपरत्वे च सर्वमपि लक्षणया प्रधानपरं स्यात् । सूत्र ईक्षतेरित्यादिहेतूक्तिश्च न स्यात् । न च तात्पर्याविषयेणेक्षणेन प्रधाननिरासः ॥

अपि चात्र सदेवेत्यादिवाक्यसमन्वयोक्तिश्चेदानन्दमयोऽभ्यासादित्यादिवत्सदीक्षतेरिति सूत्रं स्यात् । प्रधानस्य शाब्दत्वनिरासमात्रं चेदिदमधिकरणं तन्निरासके चतुर्थपादे स्यात् । किं चास्मन्मते आनन्दमयस्तत् ब्रह्मैवेत्यादिरूपेण विधेयार्पणायानुषंजनीयस्य तत्पदस्येह तदशब्दं न ईक्षतेरित्युद्देश्यसमर्पकतयान्वयो हेतुसाध्ययोः सामानाधिकरण्यं च । तव तु अशब्दं प्रधानं कारणं न कारणस्येक्षितृत्वादिति वदतो हेतुविभक्त्यभावेन साध्यत्वयोग्यश्रुताशब्दत्वरूपसाध्यत्यागेन साध्यकल्पनार्थमध्याहृतस्य कारणपदस्य विभक्तिपरिणामेनावृत्तिर्वैयधिकरण्यं च । कारणमशब्दं प्रधानं नेति कारणस्योद्देश्यत्वे च 'अशब्दं हि त'दिति हेतूक्तस्याशब्दत्वस्य कारणेऽसिद्धिः । किंचाशब्दत्वमवाच्यत्वं वा शब्दवृत्तिमात्राविषयत्वं वा वेदासिद्धत्वं वा कारणत्वेन वेदासिद्धत्वं वा । चतुष्टयमपि ब्रह्मण एव । त्वन्मते शास्त्रप्रतिपाद्यस्य शुद्धस्यावाच्यत्वात् अवाच्ये च वृत्त्यंतरायोगात् । न तु प्रधानस्य । साख्यमते तस्य वाच्यत्वात् । कारणत्वेनैवाजामित्यादिश्रुतिसिद्धत्वाच्च । त्वयापि त्रिगुणस्योपादानतया 'माया तु प्रकृति'मित्यादिश्रुतिसिद्धत्वाङ्गीकाराच्च । त्रिगुणस्य पारमार्थिकत्वादावेव हि तव विवादः ॥

ननु 'आनुमानिकमप्येकेषा'मित्यत्रानुमानिकशब्देन सांख्यानुमानकल्पितं यत्त्वया विवक्ष्यते तदेव मयाऽत्राशब्दशब्देन लक्ष्यत इति चेन्न । सांख्योत्प्रेक्षितानुमानगम्यत्वस्य प्रधानं सदेवेत्यादिवाक्यार्थो नेत्यत्राहेतुत्वात् । अन्यथा तार्किकोत्प्रेक्षितानुमानगम्यत्वादीश्वरस्यापि सदेवेत्यादिवाक्यार्थत्वं न स्यात् । त्वया चाशब्दं हि तदिति तस्य तत्र हेतुत्वोक्तेः । किंच त्वयात्रोक्ताशब्दत्वसिद्ध्यर्थं चतुर्थपादेऽव्यक्ताजादिशब्दानां सूक्ष्मशरीरादिपरतामुक्त्वा प्रधानपरतां निषेधता तस्य सर्वथा वेदासिद्धत्वमेवाशब्दत्वं वाच्यम् । तच्चाशक्यमित्युक्तम् ॥

एतेन स्वप्रधानतया वेदाप्रतिपाद्यत्वमशब्दत्वमिति निरस्तम् । तदेतदभिप्रेत्योक्तं भाष्ये 'न चाशब्दत्वमितरसिद्ध'मिति । अनुव्याख्याने च 'न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसा'विति । किंचात्मन ईक्षारूपस्य न स्वरूपेणेक्षि

तृत्वम् । अव्यक्तादिजडविशिष्टस्य तत्सभवेऽव्यक्तस्याप्यात्माविवेकेनात्म विशिष्टस्य तत्स्यात् । तन्निष्ठस्येत्याद्युत्तरसूत्रविरोधश्च । आत्मशब्दादित्य त्राप्यात्मशब्दवाच्यत्व हेतुश्चेदसिद्धिः । तल्लक्ष्यत्वतत्प्रतिपाद्यत्वमात्रे तु प्रधान स्यापि । किंच किमात्मशब्दस्य चेतनार्थत्वादचेतने प्रधाने तदनुपपत्तिर्विवक्षिता कि वा तस्य स्वरूपार्थत्वत्वदनेन जीवेनात्मनेति चेतनतया प्रसिद्धजीवस्वरूपताया अचेतनेऽनुपपत्तिः । नाद्यः । चेतनत्वस्य ज्ञातृत्वरूपत्वे ब्रह्मण्यपि शुद्धे तद भावात् । विशिष्टे चेत्प्रधानेऽप्युक्तरीत्या तत्सभवात् । ज्ञानत्वरूपत्वे तु तदर्थस्यात्मशब्दस्येक्षितृत्वं गौणमित्यत्रैव हेतुत्वेन गौणत्वाभावे हेतुत्वायोगात् । नांत्यः । सार्वज्ञासार्वज्ञादिविरुद्धांशत्यागेन चिद्रूपेण जीवब्रह्मैक्यवज्जडत्वादि विरुद्धांशत्यागेन सद्रूपेण प्रधानैक्यस्यापि संभवात् । तन्निष्ठस्येति सूत्रेऽपि तच्छब्दार्थः शुद्ध आत्मा विशिष्टो वा । नाद्यः । तस्याद्यसूत्रोक्तेक्षितृत्वा योगात् । नांत्यः । विशिष्टनिष्ठस्य साक्षान्मोक्षानन्वयात् । परंपरया तदन्वयस्तु प्रधाननिष्ठस्यापि । एवं सूत्रान्तरेपि सुधोक्तरीत्या दूषणं द्रष्टव्यम् ॥

एतेन इदमधिकरणं प्रधानादेर्जडस्य हेतुत्वनिरासकमिति केषांचित्पक्षोऽप्यपास्तः । समन्वयागत्यादेः । किंच न तावत्प्रधानस्य कारणत्वमुपादानत्वं वा निरसितुमिदमधिकरणम् । तयोस्त्वन्मतेऽपि प्रधाने सत्वात् । उक्तं हि 'तदधीनत्वा'दितिसूत्रे त्वयैव 'न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः । अपि तु परमपुरुषशरीरतया तदात्मकत्वविरहेणे'ति । यथा च प्रधानं केवलमकारणं तथा ब्रह्मापि । विशिष्टस्यैव कारणत्वात् । नापि प्रधानस्य वाक्यांतरकारणत्वेऽपि 'सदेव सोम्येद'मित्यादिसद्विद्याया ब्रह्मकारणत्वपरत्वमिति वक्तुमिदम् । 'यदि सद्विद्या ब्रह्मपरा तदा तदैकार्थ्यात्सर्वाणि कारणवाक्यानि ब्रह्मपराणी'ति त्वयैवोक्तत्वात् । अन्यथेक्षत्यधिकरणं कारणस्याचित्वनिरासकमिति त्वदभिप्रेतस्यासिद्धेः । न च सर्वेषा कारणवाक्याना ब्रह्मपरत्वेऽपि प्रधानकारणताया मानांतरात्सिद्धिः । कारणस्य शास्त्रयोनित्वात् । नापि प्रधानस्येश्वरनियम्यत्वादिरूपतच्छरीरत्वनिरूपणार्थमिदम् । अत्र तदप्रतीतेः । अंतर्याम्यधिकरणे तदधीनत्वादित्या-

दावन्यत्रैव तन्निरूपणाच्च । नापि प्रधानस्य कर्तृत्वं वा कर्तृत्वे सत्युपादानत्वं वा निरसितुमिदम् । तयोः प्रधाने साङ्ख्येनाप्यनंगीकारात् । प्रकृत्यधिकरणेन पुनरुक्तेश्च ॥ किंच त्वत्पक्षे शास्त्रयोनिसूत्रे वेदान्तानामनुमानप्राप्तकारणानुवादित्वेनाविचार्यत्वमिति पूर्वपक्षवदिहापि सांख्यस्मृतिप्राप्तानुवादित्वेनाविचार्यत्वमिति पूर्वपक्षसंभवादिदमधिकरणं चतुस्सूत्रीवच्छास्त्रारंभसमर्थनार्थं सत्समन्वयसूत्रात्पूर्वं स्यात् ॥

यादवप्रकाशीये तु 'स्वाप्यया'दित्यस्य 'सता सोम्य तदा संपन्नो भवती'तिवाक्य विषयः । 'गतिसामान्या' दित्यस्य तु 'सति संपद्यामह' इति वाक्यं विषय इत्युक्तम् । तन्न । वाक्यभेदेन सूत्रभेदेऽतिप्रसंगात् ॥

**टीकाक्षरार्थस्तु — न तच्छब्दगोचरमितियुक्तमिति ॥** उपलक्षणं चैतत् । शब्दाना गवां ज्ञानानां च चरश्चरणं वृत्तिर्यस्मिन् । तच्छब्दगोचरमिति व्यधिकरणबहुव्रीहिर्वा । चरश्चरणमस्यास्तीति मत्वर्थीयाऽच्प्रत्ययान्तत्वं वाश्रित्य शब्दगोचरमित्यस्य साधुत्वं द्रष्टव्यम् । ततश्च 'इत्यादिश्रुतौ मनसा सहेत्यदृश्यत्वस्याप्युक्तत्वादीक्षणीयत्वमसिद्धमिति पूर्वपक्ष्यभिप्रायः । पूर्वमर्थापत्तिपरतया व्याख्यातम् । इदानीं परिशेषपरतया व्याचष्टे — **परिशेषप्रमाणेन वेति** ॥ यद्यपि स्वमतेऽर्थापत्तिपरिशेषयोरनुमानता । तथापि तयोर्भेदमुपेत्य वानुमानत्वावान्तरभेदमाश्रित्य वा पक्षान्तरोक्तिः । **श्रुतिस्मृती चाहेति** । श्रुतावामनन्तीति साक्षाद्वाच्यत्वोक्तेः । स्मृतौ चाहमेवेत्यवधारणोपपत्तये मुख्यतया वेद्यत्वस्य विवक्षणीयत्वात् । तस्य च वाच्यत्वं विनाऽयोगात् । सर्ववेदलक्षणाया अयोगाच्च वाच्यत्वसिद्धिरितिभावः ।

ननु न विशिष्टमीक्षितृ येन जिज्ञास्यत्वायोग. किंतु शुद्धमेव मायासबंधादीक्षित्रिति पूर्वत्रारुच्या दोषान्तरमाह — **किंच माययेक्षणमिति** । गौणग्रहणे बाधकस्येत्यादौ गौणशब्देन मुख्यासंभवे गौणाश्रयणादित्यत्रेवा मुख्यार्थो न विवक्षित· । किंतु सत्त्वादिगुणयुक्तजीवरूपमुख्यार्थ इति द्रष्टव्यम् ॥

**स्वरूपप्रतिमारूपाभिप्राय इति** । आत्मनि स्वरूपाभिप्रायोऽनात्मनि प्रतिमारूपाभिप्राय इत्यर्थः । **श्रुतेरार्जवसंभवादिति** । आत्मानात्मशब्दयो

श्चेतनाचेतनविषयतया प्रसिद्धेः रूपशब्देऽनेकार्थत्वस्याकल्प्यत्वाच्च तद्विषयत्वे श्रुतेरार्जवं भवतीत्यर्थः । **स्वभावविषयत्वोपपत्तेरिति** । जीवात्मन्यपि हि दुःखादिदोष औपधिक एवेति भावः । 'यस्ये'ति श्रुतौ विश्वशब्दो 'विश्वो हिरण्यगर्भोऽग्निरित्याद्या'विव वाय्वर्थः । तेन सर्वस्य कर्तेत्यनेन न पुनरुक्तिरित्याह— **वायुकर्तेति** । प्रतिबुद्धशब्दार्थमाह— **सर्वज्ञ इति** । अनुवित्तशब्दार्थमाह— **ज्ञात इति** । ततश्च तयोर्न पौनरुक्त्यमिति भावः ॥

**न सपक्षसत्त्वमिति** । ततश्च नासाधारणानैकान्तिकतेति शेषः । केवलान्वयिनीति । केवलान्वयी दृष्टान्ततयोक्तः । ब्रह्म वाच्यं लक्ष्यत्वादि त्यभिप्रेतकेवलान्वय्युपयोगितया वा । **तदविनाभाव्यभावत्वाभावादिति** । साध्याभावाविनाभूताभावप्रतियोगिन एवोपाधित्वादिति भावः । **व्याप्तत्वनिश्च यादिति** । साध्यव्यापकत्वानिश्चयादित्यर्थः । कार्यकारणभावादेरेव व्याप्ति निबन्धनत्वे तदभावाद्द्रव्यत्वसंयोगित्वयोरपि सा न स्यादित्याह — **द्रव्यत्वसं योगित्वयोरिति** ॥

ननु संयोगितायाः द्रव्यत्वावच्छेद्यत्वहानिरेव विपक्षे बाधिका तयो र्व्याप्तिनिबन्धनमित्याशङ्क्य तर्हीहाप्यनवस्था विपक्षे बाधिकेत्यभिप्रेत्याह । **अवाच्यस्य लक्षणायामित्यादिना** । ननु सत्यज्ञानादिवाक्ये लक्ष्यार्पकं ब्रह्मपदं वाचकमेव । सत्यादीनि लक्षणपदानि तु न वाचकानीति शङ्कते— **लक्ष्यपरपदस्येति** ॥

॥ इति ईक्षत्यधिकरणम् ॥

[ आनन्दमयाधिकरणम् ]

**6 – ॐ आनन्दमयोऽभ्यासात् ॐ ॥ १-१-६ ॥**

वैदिकाः शब्दास्तावच्चतुर्विधाः । अन्यत्रैव प्रसिद्धा उभयत्र प्रसिद्धा अन्यत्र प्रसिद्धास्तत्र प्रसिद्धा इति ॥

नन्वन्यत्रैव प्रसिद्धवत्तत्रैव प्रसिद्धा अपि पृथग्वाच्याः । न च तत्रेत्यनेन तत्रैवेति विवक्षितम् । अन्यथा तत्रापीति विवक्षापत्त्योभयत्र प्रसिद्धेष्वंतर्भावः स्यात् । अत एव तत्र प्रसिद्धाः सुधाया ब्रह्मण्येव प्रसिद्धा इति निर्दिष्टा इति वाच्यम् । तथात्वेऽन्यत्रैव प्रसिद्धाना पार्थक्यायोगात् ॥

ननु लोकतोऽन्यत्रैव प्रसिद्धा अन्यत्र प्रसिद्धाः श्रुत्यादिभिरन्यत्रैव प्रसिद्धास्त्वन्यत्रैव प्रसिद्धा इति भेदः । अत एव 'श्रुतिलिंगादिभिरन्यत्रैव प्रसिद्धाना'मिति चतुर्थपादे भाष्यम् । अत्र च प्रत्यधिकरण लोकतोऽन्यत्र प्रसिद्धानामिति टीका च । तत्र प्रसिद्धानां तत्रैव प्रसिद्धाना चाऽगुणगद्यसमन्वयत्वेना भेदविवक्षेति चेन्न । अन्यत्र प्रसिद्धत्वेनाभिमतस्यानन्दमयादिनाम्नोऽन्यस्मिन्नर्थविशेषे सर्वगतत्वान्तर्यामित्वादिलिंगात्मकशब्दजातस्याप्यन्यत्रादित्यादौ, इंद्राकाशादिशब्दानामिंद्रादाविव लोकतोऽप्रसिद्ध्याऽन्यत्र प्रसिद्धत्वाभावापातात् । प्रत्युतादित्यश्रुत्यादिना सर्वगतत्वादेरन्यत्र प्रसिद्धेर्वक्ष्यमाणत्वेनावरत्वादिलिंगेनान्यत्रैव प्रसिद्धाव्यक्तादिशब्दानामिवान्यत्रैव प्रसिद्धता स्यात् । यथा च सर्वगतत्वादेरन्यत्र प्रसिद्धिसाधकादित्यादिश्रुतिः अन्तर्यामित्वादेरन्यत्र प्रसिद्धिसाधकशरीरित्वादिलिंगं च लोकतोऽन्यत्र प्रसिद्धं तथाऽव्यक्तादिशब्दस्यान्यत्र प्रसिद्धिसाधकमवरत्वादिलिंगमपि लोकतोऽन्यत्र प्रसिद्धमेव ॥

किंच अन्यत्रैव प्रसिद्धाव्यक्तप्रकृत्यादिशब्देष्वपि लोकतोऽप्यन्यत्र प्रसिद्धेरसत्त्वात् अन्यत्र प्रसिद्धेन्द्राकाशादिशब्देषु च श्रुत्यादिनाप्यन्यत्र प्रसिद्धेः सत्त्वात्सांकर्यं स्यात् । न च प्रबलश्रुतिलिङ्गादिभिरन्यत्र प्रसिद्धा अन्यत्रैव प्रसिद्धाः । श्रुत्यादिमात्रेणान्यत्र प्रसिद्धास्त्वन्यत्र प्रसिद्धा इति भेदः । अव्यक्तादिशब्दानामन्यत्र प्रसिद्धिसाधकावरत्वादीनामिव गुहाप्रविष्टत्वादेरन्यत्र प्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन्ब्रह्मण्यसंभवेन बलवत्वात् । तस्मान्नान्यत्र प्रसिद्धानामन्यत्रैव प्रसिद्धेभ्यो भेदः ॥

किंचोभयत्र प्रसिद्धे द्युभ्वाद्यायतनत्वादिलिङ्गे ज्योतिरादिनाम्नि च न तावल्लोकत उभयत्र प्रसिद्धाः । प्रकृत्यादौ तस्य लोकतोऽप्राप्तेः । नापि श्रुत्यादितः । तथैव टीकादौ वक्ष्यमाणत्वादिति युक्तम् । आनन्दमयेन्द्राव्यक्तादि

शब्देष्वपि पूर्वोत्तरपक्षश्रुत्यादिनोभयत्र प्रसिद्धेर्वक्तुं शक्यत्वात् । तस्मादुभयत्र प्रसिद्धानामपि नान्यत्र प्रसिद्धादिभ्यो भेदः ॥

किंचाकाशादिशब्दाना 'आकाशस्तल्लिङ्गा'दितिप्रथमे 'आकाशोऽर्थांतरत्वादिव्यपदेशा'दिति तृतीये 'कारणत्वेन चाकाशादि'ष्विति चतुर्थे च पादे समन्वयोक्तेरन्यत्रोभयत्रान्यत्रैव च प्रसिद्धता स्यात् ॥

किंच रूढत्वयौगिकत्वाभ्यां हि नामलिङ्गभेदः । सुधाया तथैवोक्तेः । 'धर्मविशिष्टधर्मिवाचिना'मिति द्वितीयपादीयटीकायामपि यौगिकत्वं लिङ्गत्वमित्यभिप्रेतत्वाच्च । अत्रापि टीकाया धर्मधर्मिवाचिपदाभ्या ते एव विवक्षिते । अन्यथा धर्मिवाचिनामन्तर्याम्यादिशब्दानां नामता धर्मवाचिनामानन्दादिशब्दाना लिङ्गता च स्यात् । स च भेदोऽयुक्तः । सर्वेषामपि ब्रह्मणि महायोगाङ्गीकारात् । न चापातप्रतीत्या रूढता । अन्नमयादिषु तदसंभवात् । न च योगरूढियुक्तानि नामानि केवलयौगिकानि लिङ्गानीति भेदः । सर्वेषां ब्रह्मणि विद्वद्रूढेः ॥

किंचान्यत्र प्रसिद्धाना नाम्ना लिङ्गाना चान्यत्र प्रसिद्धत्वाविशेषात्पादभेदो न स्यात् । अन्यथा तृतीय उभयत्र प्रसिद्धाना चतुर्थे चान्यत्रैव प्रसिद्धाना नाम्ना लिङ्गाना च समन्वयोक्तिः स्यात् । तस्मान्न पादभेदो युक्तः ॥

नापि तत्क्रमः । महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्ये ह्यन्यत्रैव प्रसिद्धाना प्राथम्यं स्यात् । सोपानारोहणन्यायेनानतिप्रयत्नसाध्यस्य प्राथम्ये तूभयत्र प्रसिद्धानां प्राथम्यं स्यादितरन्यत्र प्रसिद्धाना पूर्वं समन्वयः । तत्रापि नाम्ना पूर्वमनन्तरं लिङ्गानां तदनन्तरमुभयत्र प्रसिद्धाना अंतेऽन्यत्रैव प्रसिद्धानामिति क्रमस्य सर्वथाप्ययोगादिति ॥

उच्यते —

अन्यंतरादिभिस्तुल्या ह्युभयस्मिन्प्रसिद्धता ।
श्रुत्यादितो लोकतो वाऽपीतरेषु प्रसिद्धता ॥
बलवच्छ्रुतिलिङ्गाद्यैरन्येष्वेव प्रसिद्धता ।
उभयत्र प्रसिद्धादेः क्रमाल्लक्षणमुच्यते ॥

यथा —

येषां प्रसिद्धिरन्यत्र केवलैव विरोधिनी ।
समन्वयस्योभयत्र प्रसिद्धास्ते हि कीर्तिताः ॥ १ ।
येषां ब्रह्मण्यप्रसिद्धिः प्रसिद्धिश्चान्यवस्तुषु ।
विरोधिन्यौ हि तेऽन्यत्र प्रसिद्धाः कथिता इह ॥ २ ॥
येषामुक्तद्वयं ब्रह्मपरत्वस्यात्यशक्यता ।
इति तिस्रो विरोधिन्यस्तेऽन्यत्रैव प्रसिद्धकाः ॥ ३ ॥

य । शब्दानां लोके ब्रह्मणीवान्यत्रप्यप्रयोगाद्यक्तिविशेषनिर्णयाय श्रुत्यन्तरान्वेषणे श्रुत्यन्तरेऽन्यत्रेव ब्रह्मण्यपि प्रयोगात् श्रुत्यन्तरसाधारण्यं प्रवृत्ति निमित्त दिसाधारण्यं वा पूर्वपक्षिणोऽपि संमतम् । अत एव येषां विषयवाक्य आपाततोऽन्योपस्थापनसमये तत्तुल्यतया च ब्रह्मोपस्थापकत्वं अत एव च येषां ब्रह्मणि समन्वयस्यान्यत्रोपस्थितिमात्रेण प्रतिबन्धः त उभयत्र प्रसिद्धाः । येषां तु वस्त्वंतरे लोकप्रसिद्ध्यादेः सत्त्वात्तद्विरोधेन क्वापि ब्रह्मणि वृत्त्यादिकं पूर्व पक्षिणो न संमतं, अत एव येषां विषयवाक्य आपाततोऽन्यमात्रोपोपस्थापकत्वं, अत एव च येषां समन्वयस्यान्योपस्थितिब्रह्मानुपस्थितिभ्यामेव प्रतिबन्धः तेऽन्यत्र प्रसिद्धाः ॥

येषां पुनर्वस्त्वंतरे लोकप्रसिद्धिस्तत्परत्वे प्रबलश्रुत्यादिकमप्यस्ति, अत एव येषां विषयवाक्य आपाततोऽत्यंतमन्यमात्रोपस्थापकत्वम् , अत एव च येषां समन्वयस्यान्योपस्थितिब्रह्मानुपस्थितिभ्यां ब्रह्मपरत्वस्यात्यशक्यकल्पनत्व-शंकया चातितरां प्रतिबंधस्तेऽन्यत्रैव प्रसिद्धाः । अत्र च सर्वत्र प्रत्येकं हेतुस्वरूपफलमुखेन लक्षणत्रयं विवक्षितम् । तत्र चाद्येन येषामित्यादिनाऽत एवेत्यतः पूर्वेण हेतुमुखं लक्षणमुक्तम् । द्वितीयेन येषामित्यादिनाऽत एवेत्यतः पूर्वेण स्वरूपमुखं अवशिष्टेन फलमुखम् । तत्र स्वरूपमुखानि द्विती-यानि लक्षणान्युभयत्रान्यत्रान्यत्रैव प्रसिद्धेति शब्दावयवार्थरूपाणि भाष्ये इहापि संग्रहश्लोके तत्तच्छब्दप्रयोगादेव सूचितानि । प्रथमानि तु टीकायामाद्या-दिपादेषु लोकतोऽन्यत्र प्रसिद्धेत्यादिना त्रिविधप्रसिद्धिकारणकीर्तनात्सूचितानि ।

तृतीयान्यपि टीकाकृतोभयत्र प्रसिद्धेषु साधारण्यस्य संदेहबीजतां तथान्यत्र प्रसिद्धेष्वन्यकोटेरन्यत्र प्रसिद्धितः प्राप्तिं तथान्यत्रैव प्रसिद्धेष्वन्य कोटेरन्यत्रैव प्रसिद्धितः प्राप्तिं च वदता समन्वयप्रतिबंधतारतम्यसूचनात्सूचितानि । उक्तं हि—

'यन्तानि प्रविभक्तानि हेतुरूपफलैः पृथ'गिति ॥

अत्र चेतरयोर्हेतुमूलत्वाद्धेतुः प्रदर्श्यते । उभयत्र प्रसिद्धानां हि द्युभ्वाद्यायतनत्वादीनां 'रुद्रो वा व लोकाधारः विष्णावेवोताश्च प्रोताश्चे'त्यादिश्रुत्यंतरसाधारण्येन, अक्षरादिशब्दानां प्रवृत्तिनिमित्तसाधारण्येन मदादिशब्दानां विषयवाक्यस्थकारणत्वादिधर्मसाधारण्येन, 'आकाशोऽर्थांतरत्वादिव्यपदेशा'दिति सूत्रविषये आकाशो ह वै नाम नामरूपयोर्निर्वहिते'ति वाक्यस्थाकाशशब्दे 'आकाशस्तल्लिंगा'दित्यत्र ब्रह्मण्यपि प्रयोगस्योक्तत्वात्प्रयोगसाधारण्येनोभयत्र प्रसिद्धिः । न तु पूर्वपक्षसिद्धांतन्यायाभ्याम् । येन सांकर्यं स्यात् । तदुक्तेस्तु प्रागाकाशस्तल्लिंगादिति सूत्रविषयवाक्ये 'अस्य लोकस्य का गतिरित्याकाश इति होवाचे'त्यत्रान्यत्र प्रसिद्धिः । 'कारणत्वेन चाकाशादिष्वि'ति सूत्रविषयवाक्ये 'आत्मन आकाशस्संभूत' इत्यत्र तु ब्रह्मलिंगाभावेन लोकतोऽन्यत्र प्रसिद्धेरबाधात्संभूतत्वादिविपरीतलिंगाच्चान्यत्रैव प्रसिद्धिरित्येकस्यैव प्रयोगभेदन दशाभेदात् द्वितयं युक्तम् ॥

यद्वा कारणत्वेनेत्यत्रावातरकारणत्वस्यैव समन्वय इति वक्ष्यते । एवं ज्योतिश्शब्दस्यापि 'ज्योतिश्चरणे'त्यत्रान्यत्र प्रसिद्धता 'ज्योतिर्दर्शना'दित्यत्रोभयत्र प्रसिद्धता 'ज्योतिरुपक्रमा' दित्यत्रान्यत्रैव प्रसिद्धतोह्या । अन्यत्र प्रसिद्धानां त्रिवृद्रादिशब्दानां लोकतः सर्वगतत्वादिलिंगानां च लोकतोऽन्यत्र प्रसिद्धादित्यादिश्रुत्यादिसाहचर्येणान्यत्र प्रसिद्धिः । न तूभयत्र प्रसिद्धानामिव ब्रह्मसाधारणश्रुत्यंतरादिनान्यत्र प्रसिद्धिः । तच्च श्रुत्यादिकं चतुर्थपादीयश्रुत्यादिवन्न प्रबलम् । श्रुत्यादेः प्राबल्यं हि प्रवृत्तिनिमित्तस्य तदधीनत्वादिना ब्रह्मणि शब्दस्य परममुख्यत्वेऽपि तस्य शब्दस्य तद्युक्तवाक्यस्य वाऽपरममुख्यवृत्त्यान्यपरत्वं विनाऽनुपपद्यमानत्वम् । न त्वापाततो ब्रह्मण्यसंभवमात्रम् । येन

द्वित्वादिकमपि बलवत्स्यात् । नापि सर्वथाऽसंभवः । येन सिद्धांतानुदयः स्यात् । न हि 'गुहा प्रविष्टा'वित्यादिषु द्विवचनं तद्युक्तवाक्यं वाऽपरममुख्यवृत्याऽप्यन्यपरम । अन्यत्रैव प्रसिद्धेषु च 'अव्यक्तात्पुरुषः परः । बसंते वसंते ज्योतिषा यजेते'त्यादिष्वव्यक्तादिशब्दस्तद्युक्त वाक्यं वाऽपरममुख्यवृत्यान्यपरमेव । अन्यथा देवतातारतम्यकर्मादि न सिध्येत् । वाक्यातरस्याप्येतत्तुल्यत्वात् । अत एव 'कामादीतरत्र तत्र चायतनादिभ्य' इत्यधिकरणेऽपरममुख्यवृत्याश्रितन्वपरत्वेन भाष्योदाहृतं 'सैषा प्रकृतिरविकृति'रिति वाक्यमेव प्रकृत्यधिकरणे टीकायामुदाहृतम् । एवं च 'एतेन सर्वे व्याख्याता' इत्यत्राप्यपरममुख्यवृत्याऽन्यपरवाक्यस्था एवासदादिशब्दा उदाहार्याः । प्रकरणात् । भाष्ये वाक्यविशेषानुपादानाच्च । टीकायां 'असद्वा इदमग्र आसी'दित्यपरममुख्यवृत्याप्यन्यपरत्वरहितस्योदाहरणं तु क्वचित् श्रुतावसच्छब्दस्य शून्ये मुख्यत्वे ब्रह्मणि चामुख्यत्वे 'असद्वा इदमग्र' इत्यत्रापि मुख्यार्थत्वाय शून्यमेव गृह्येतेति दर्शयितुम ॥

अथवा ब्रह्मपरत्वे बहुविप्लवापत्तिरूपतर्कानुगृहीतत्वं बलवत्वम । बहुविप्लवापत्तिश्चतुर्थपादीयाधिकरणेषु तत्र तत्रैव टीकायां वक्ष्यते । श्रुत्यादिभिरन्यत्रैव प्रसिद्धानामिति चतुर्थपादीयभाष्ये तु ब्रह्मणि वृत्तेरत्यंतासभावितत्वरूपस्योक्तद्विविधबलवत्वकार्यस्यावधारणेन विवक्षिततयातिव्याप्तेरभावेन तत्परिहारार्थं बलवत्पदं न प्रयुक्तम् । चतुर्थपादीयटीकाया तु भाष्योक्तावधारणनिर्वाहकेन बलवत्वेनैवातिव्याप्तिः परिहृतेति दिक् ॥

नामलिंगभेदस्तु यान्यापाततो रूढान्येव तानि नामानि । तद्विपरीतानि तु लिंगानि । अथवा यान्यापाततो रूढानि तानि नामानि । यान्यापाततो यौगिकानि तानि लिंगानि । अत्राद्यपक्षे योगरूढानि लिंगानि । द्वितीये तु नामलिंगोभयात्मकानि ॥

वस्तुतस्तु यान्यापाततो रूढिरहितान्यंतर्यामीत्यादीन्येकप्रातिपदिकमारूपाणि वा 'सर्वेषु भूतेष्वेतम् । यस्मिन्द्यौ'रित्याद्यनेकपदसमभिव्याहार रूपाणि वा सर्वेषु यस्मिन्निति सप्तमीविभक्तिसहितप्रातिपदिकरूपाणि वा

धर्मद्वारा धर्म्युपस्थापकानि तानि लिंगानि । यानि तु तद्विपरीतान्यापाततो रूढानि योगरूढियुक्तानि वा तानि नामानि । अत एव पूर्वपक्षदशायामपि देवतासु योगरूढियुक्तानामिद्रादिशब्दाना नामता । अत एव च रूढाना नामत्वे यौगिकानां च लिंगत्वे योगरूढानां तृतीयप्रकारतापत्तिरिति शंकानवकाशः । नाम्ना लिंगानां चान्यत्र प्रसिद्धत्वाविशेषेऽप्यवान्तरभेदात्पाद-भेदः । अध्याये पादचतुष्टयादिनियमादवान्तरभेदविवक्षया तृतीयादौ न पादभेद आश्रितः ॥

यद्वा नाम्नां प्राधान्याल्लिंगाना च द्वितीये समन्वयोक्त्या बुद्धिस्थत्वादुभयानुसरणाय न तत्र भेद आश्रितः । अथवाऽऽपातसिद्धनामलिगयोर्भेदमाश्रित्याद्यद्वितीयपादयोर्भेदः कृतः । इदानीमापातप्रसिद्धितिरस्कारेण तत्रोक्तमहायोगविद्धरूढिभ्यामेकीकृतत्वान्न भिन्नपादनिवेशार्हतेति दर्शयितुं न तत्र भेद आश्रितः । तस्माद्यथाग्रंथं पदभेदो युक्तः ॥

पादक्रमस्तु — चतुर्थपादीयसमन्वयस्यासर्वाधिकारिकत्वात् तथा पादत्रयेण श्रुतिलिङ्गादिभिर्ब्रह्मणि समन्वय उक्ते तर्हि तैरेव श्रुतिलिङ्गादिभिरन्यपरताऽस्त्विति शङ्कायास्त्रितयानन्तरमेवोदयात् तत्तच्छब्दप्रवृत्तिनिमित्तगुणमात्रसिद्धिफलकत्वेन कारणत्वादिसिद्धिफलकत्वाभावाच्चात्यता । इतरयोरपि महामल्लभङ्गन्यायेनान्यत्र प्रसिद्धसमन्वयस्य प्राथम्यम । तदुक्तमनुव्याख्याने —

'तत्र प्रथमतोऽन्यत्र प्रसिद्धाना समन्वयः ।
शब्दाना वाच्य एवात्र महामल्लेशभङ्गव'दित्यादि ॥

यद्वा अन्यत्र प्रसिद्धेष्वन्यपरत्वस्य प्रसिद्धिमात्रमूलत्वेन स्थूलत्वात् उभयत्र प्रसिद्धेषु 'रुद्रो वा व लोकाधार' इत्यादिश्रुत्यादिमूलत्वेन सूक्ष्मत्वात् अन्यत्रैव प्रसिद्धेषु पुनः प्रसिद्धिः श्रुतिलिङ्गादिकं चेत्युभयमूलत्वात्तन्निरासकपादक्रमः । अयं च पक्षो भाष्येऽन्यत्र प्रसिद्ध दिशब्दप्रयोगादेव सूचितः ॥

केचित्तु उभयत्र प्रसिद्धेरन्यत्र प्रसिद्धनिरूप्यत्वादन्यत्रैव प्रसिद्धेश्चैवकारव्यावर्त्यतया तदुभयनिरूप्यत्वात्पादक्रम इत्याहुः । तन्न उभयत्र प्रसिद्ध्यादेरुक्तरीत्याऽन्यत्रप्रसिद्धिनिरूप्यत्वाद्यभावात् । अन्यत्र प्रसिद्धेष्वपि नाम्ना प्रधानभूत

धर्मिणि साक्षाद्धीजनकत्वात् यौगिकस्यावयवार्थे रूढ्यपेक्षावद्रूढस्य योगापेक्षाया अभावाच्च प्राथम्यम् । यद्वा लिंगैर्नामसमन्वय उक्ते संदिग्धब्रह्मपरत्वेषु हेतूकृतलिंगेष्वेव वा तज्जातीयत्वेन बुद्धिस्थेषु लिङ्गान्तरेषु वा कथं ब्रह्मपरत्वमिति शङ्कायां तन्निरासाल्लिंगानामानन्तर्यम् । लिंगसमन्वयस्तु प्रयेण निर्णीतलिंगान्तराधीनो न तु नामाधीन इति वैषम्यम् । तस्माद्युक्तः पादक्रमः ॥

न चैवमन्यत्रैव प्रसिद्धादीना समन्वयेनैव कैमुत्यन्यायेनान्यत्र प्रसिद्धादिसमन्वयसिद्धेस्तदुक्तिवैयर्थ्यम् । 'आत्मन आकाशस्संभूत' इत्यादौ भूताकाशस्य संभूतत्ववदस्य लोकस्येत्यादावाकाशस्य लोकगतित्वादिप्रसंगात् पादत्रयसिद्धान्तमुपेत्य चतुर्थपादे विशेषहेतुभिः पूर्वपक्षोदयेन पादत्रयपूर्वपक्षदशाया चतुर्थपादीयसिद्धान्तानुन्मेषाच्च । अन्यथा स्वर्गकामाधिकरणसिद्धफलान्वयमुपेत्य किं भावार्थस्य फलकरणता किं वा नामार्थस्येति विचारात्मकभावार्थाधिकरणसिद्धान्तेन फलाभावशङ्कारूपस्वर्गकामाधिकरणपूर्वपक्षानुदयः स्यात् ॥

ननु यथान्यत्रैव प्रसिद्धाना ब्रह्मपरता तथा तत्रैव प्रसिद्धानामपि 'जनितोत विष्णो'रित्यादाविवान्यपरत्वाशङ्काया समन्वयो व्युत्पाद्य एवेति चेन्न । तत्र प्रसिद्धा इत्यनेनान्यपरत्वशङ्काराहित्यस्य विवक्षितत्वात् । अन्यत्तु स्वस्वस्थाने वक्ष्यते ॥

अन्ये तु प्रथमे स्पष्टब्रह्मलिङ्गान्युदाहरणानि । द्वितीयतृतीययोस्त्वस्पष्टब्रह्मलिङ्गानि । तयोस्तु सविशेषनिर्विशेषविषयतया भेदः । चतुर्थे प्रधानस्याशब्दत्वोक्तिरिति पादार्थानाहुः । तन्न । यथा प्रथमे 'अतस्तद्धर्मोपदेशा'दित्यादौ 'सैवक्सोम तदुक्थं तद्यजु'रिति सर्वात्मकत्वस्य 'सर्वेभ्यः पाप्मभ्य उदित' इति सर्वपापराहित्यस्य च ब्रह्मलिङ्गस्य स्पष्टता तथा द्वितीये 'सर्वत्र प्रसिद्धोपदेशा'दित्यत्र 'सर्वं खल्विद ब्रह्मे'ति जीवेष्वयुक्तस्य सार्वात्म्यादेः 'अत्ता चराचरे'त्यत्र 'अन्यत्र धर्मादन्यत्राधर्मा'दिति पुण्यपापराहित्यादेः 'अन्तर' इत्यत्र 'एतदमृतमभयमेतद्ब्रह्मे'त्यमृतत्वादेः 'अन्तर्यामी'त्यत्र 'एष त आत्मान्तर्याम्यमृत'इत्यमृतत्वादेः 'अदृश्यत्वादिगुणक' इत्यादौ 'यः सर्वज्ञ' इति सार्वज्ञ्यादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात । एवं तृतीये 'द्युभ्वादी'त्यत्र अमृतस्यैष सेतुः

य सर्वज्ञ'इत्यमृतसेतुत्वसार्वज्ञादेः 'भूमे'त्यत्र 'यत्र नान्यत्पश्यति' इत्यद्वितीयत्वादेः 'अक्षरमंबरे'त्यत्र 'अदृष्टं द्रष्ट्रश्रुतं श्रोत्रस्थूलमनण्वि'त्यदृश्यत्वास्थूलत्वानणुत्वादेः 'ईक्षतिकर्मे'त्यादौ 'परात्पर'मिति परात्परत्वादेर्ब्रह्मलिङ्गस्य स्पष्टत्वाच्च ॥

वाक्यान्तरे ब्रह्मधर्मतया निर्णीतत्वं वा जीवादौ स्वारस्येनानुपपद्यमानत्वं वा स्पष्टत्वम् । न च स्वारस्येनापि जीवादावनुपपद्यमानत्वं विषयवाक्ये ब्रह्म-धर्मतया निर्णीतत्वं वा जीवादिप्रापकलिङ्गराहित्यं वा । पूर्वपक्षानुदयापातात् । तच्च सर्वं खल्विदमित्यादावस्ति । न च 'सर्वत्र प्रसिद्धे'त्यादेः 'मनोमयः प्राणशरीरो भारूप' इत्यादिकमुदाहरणम् । तत्र च न ब्रह्मलिंग स्पष्टम् । किंतु 'सर्वं खल्विद'मित्युपक्रम इति वाच्यम् । प्रथमेऽप्यंतरित्यस्योदाहरणे य एषोंतरित्यत्र सार्वात्म्यस्य 'ज्योतिश्चरणे'त्यस्योदाहरणे 'यदतःपरो दिवो ज्योति' रित्यत्रामृतत्वादेः 'प्राणस्तथे'त्यस्योदाहरणे 'प्राणोस्मि प्रज्ञात्मे'त्यत्र हिततमत्वादेर्ब्रह्मलिङ्गस्याभावात् । द्वितीयादावपि 'य एषोंऽतरक्षिणि पुरुषो दृश्यते एतदमृतमभयमेतद्ब्रह्म एष त आत्मान्तर्याम्यमृत' इत्याद्युदाहरणवाक्य एवामृतत्वादेः स्पष्टत्वाच्च । यथा च द्वितीये तृतीये च समन्वेतव्यं मनोमयत्वादिकं न ब्रह्मणि स्पष्टं तथा प्रथमे समन्वेतव्यमादित्यस्थत्वाकाशप्राणशब्दादिकं न ब्रह्मणि स्पष्टम् ॥

यच्च द्वितीये सविशेषं तृतीये निर्विशेषमित्युक्तं, तदपि न । द्वितीयेऽपि 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्मे'त्यविद्यादिसर्वभ्रमाधिष्ठानत्वरूपसार्वात्म्यादेः 'अत्ते'त्यत्र 'अन्यत्र भूताच्च भव्याच्च महतो महीया'निति कालत्रयातीतत्वादेः 'अन्तर' इत्यत्र 'कं ब्रह्म खं ब्रह्मे'ति पूर्णसुखत्वादेः 'अन्तर्यामी'त्यत्र 'एष त आत्मे'ति जीवतादात्म्यादेः 'अदृश्यत्वादी'त्यादौ च 'यत्तदद्रेश्य'मित्यदृश्यत्वादेस्सविशेषेऽनुपपत्तेः ॥

तृतीयेऽपि 'द्युभ्वादी'त्यत्र 'तमेवैकं जानथ यदा पश्यः पश्यते रुक्मवर्ण'मिति दृश्यत्वरूपित्वादेः 'भूमे'त्यत्र 'एवं पश्य'न्निति सप्रकारकज्ञानविषयत्वादेः 'अक्षर'मित्यत्र 'अदृष्टं दष्टृश्रुतं श्रो'त्रिति द्रष्टृत्वादेः 'ईक्षतिकर्मे'त्यत्र

पुरुषमीक्षत' इति दृश्यत्वादेः 'दहर' इत्यादौ 'सत्यकामः सत्यसंकल्प' इति कामादेर्निर्विशेषेऽनुपपत्तेश्च ॥

यदि च चिन्मात्रस्यैव निर्विशेषत्वेन भ्रमाधिष्ठानत्वादिविशिष्टस्य सविशेषत्वं तर्हि द्युभ्वाद्यायतनत्वविशिष्टमपि सविशेषमेव स्यात् । यस्मिन्द्यौरित्यादेश्च लक्षणया चिन्मात्रपरत्वे सर्वं खल्विदमित्यादेरपि प्रामाण्याय तन्मात्रपरत्वं स्यात्। सविशेषे वस्तुनो निर्विशेषत्वस्य निर्विशेषे चारोपितविशेषस्याविरोधेऽप्युभयत्राप्युभयोक्तौ वाक्यव्यवस्थायोगेन तन्निबंधनपादव्यवस्था न युक्ता ॥

एतेन प्रायिकत्वात्पादव्यवस्थेति निरस्तम्, सर्वसाङ्कर्यस्योक्तत्वात् । अस्माकं नामपादे 'अन्तस्तद्धर्मे'त्यत्र लिङ्गसमन्वय इन्द्राद्यनेकनामसमन्वयार्थः तथा लिङ्गपादे वैश्वानरनामसमन्वयः पाचकत्वाद्यनेकलिङ्गसमन्वयार्थ इति टीकायामेव वक्ष्यते ॥

यत्तु यौगिकरूढविषयतया द्वितीयतृतीययोर्भेद इति परमतं तन्न । तृतीयेऽपि द्युभ्वाद्यायतनत्वस्य 'ईक्षतिकर्मे'त्यत्राभिध्यातव्यत्वस्य 'शब्दादेव प्रमित' इत्यादौ चाङ्गुष्ठमात्रत्वादेश्च यौगिकत्वात् । एवं चतुर्थेऽपि पादे त्वया 'आनुमानिक'मिति 'ज्योति'रिति 'न सङ्ख्ये'त्यधिकरणत्रय एव प्रधानस्याशाब्दताया निरस्तत्वादन्यत्र 'कारणत्वेन चाकाशादि'ष्वित्यत्र सृष्टिवाक्यविगानस्य 'जगद्वाचित्वा'दित्यत्र 'यस्य चैतत्कर्म स वेदितव्य' इत्यादिवाक्यानां जीवादिपरत्वस्य 'वाक्यान्वया'दित्यत्र 'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्यानां जीवपरत्वस्य च 'प्रकृतिश्चे'त्यत्र निमित्तोपादानभेदस्य च निरस्तत्वात्प्रधानाशब्दता न चतुर्थपादव्यापिनी ॥

यच्चोक्तं परैः प्रधानाद्येव कारणतया सर्ववेदान्तार्थ इति लक्षणासंभवाशङ्कायाक्षिपाद्यां निरासः । चतुर्थपादे तु प्रधानमपि कारणतया वेदान्तैकदेशार्थ इत्यतिव्याप्तिशङ्कायाः । अत एवा'नुमानिकमप्येकेषा'मिति सूत्रेऽपिशब्द एकशब्दश्चेति । तन्न । आनुमानिकमित्यादौ पूर्वपक्षिणा यस्य 'महतः परमव्यक्तं अजामेका'मित्यादेः प्रधानपरत्वं शङ्कितं तस्यैकदेशस्य सिद्धान्तेऽपि

ब्रह्मपरत्वाभावात् अविद्यादिपरत्वे च ब्रह्मलक्षणस्य प्रधानेऽनतिव्याप्तावप्य विद्यायामतिव्याप्त्यपरिहारात् । तस्मान्न परमते पादभेदो युक्तः ॥

नापि तत्क्रमः — पूर्वोक्तस्य प्राथम्ये आनन्दमयादौ निर्विशेषविचारायोगात् । दुर्बोधस्य प्राथम्ये तु स्पष्टब्रह्मलिङ्गानां प्राथम्यायोगात् । निर्विशेषस्य तृतीये निरूपणायोगाच्च । ईक्षत्यधिकरणोक्ताशब्दत्वस्य विक्षिप्य चतुर्थपादे व्युत्पादने हेत्वभावाच्च । चतुर्थस्य तु समन्वयासङ्गतिः परैरेवाङ्गीकृतेति ॥

केचित्तु जन्मादिसूत्रे ब्रह्म कारणमेव ब्रह्मैव कारणमित्यवधारणद्वयं विवक्षितम् । तत्र लक्षणेऽसंभवरूपायोगव्यवच्छेदः प्रथमपादे, अतिव्याप्तिरूपान्ययोगव्यवच्छेदस्त्रिपाद्या तत्राप्यस्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये स्पष्टजीवादिलिङ्गकानि तृतीये तत्प्रतिपादनच्छायानुसारीणि चतुर्थे विचार्यन्त इत्याहुः । तन्न । आद्यपादेऽपि त्वन्मते 'ईक्षतेर्नाशब्द' मित्यत्र प्रधान कारणतायाः 'कामाच्च नानुमानापेक्षे'त्यादौ जीवादिकारणतायाश्च निषिद्धत्वे नातिव्याप्तिपरिहारस्य तत्रापि सत्त्वात् ॥

नन्वीक्षत्याधिकरणादौ 'सदेवे'त्यादिवाक्यानां प्रधानपरत्वे तदैकार्थ्यात्सर्वाणि कारणवाक्यानि तथा । एवं च न ब्रह्म कारणमित्यादिः पूर्वपक्षः । स चासंभवपर्यंत इति चेत् सदेवेत्यादिवाक्यानां ब्रह्मपरत्वे तदैकार्थ्यात्सर्वाणि वाक्यानि तथा । एवं च न प्रधानादि कारणमिति सिद्धान्तः । स चातिव्याप्तिपरिहारपर्यंत इत्यपि संभवात् । द्वितीयतृतीययोरपि पादयोः पूर्वपक्ष एवमसंभवपर्यंततया वक्तुं शक्यत्वाच्च ॥

यच्चोक्तं चिदचिद्विलक्षणं मूलकारणभूतं वस्तु प्रथमे प्रतिपाद्यते । अथ तस्य गुणविशेषास्त्रिपाद्यामिति । तत्र चिदचिद्विलक्षणत्वं यदि कारणत्वेनैव तदांतर्यामीत्यादौ कारणत्वादन्यस्यादित्यादिस्थवज्योतिर्ज्ञादेरुक्तेरंतरित्यादेरप्याद्यपादांतर्गतिर्न स्यात् । यदि तु गुणांतरेणापि तदा त्रिपाद्या अप्याद्यपादांतर्गतिः स्यात् ॥

यच्चोक्तमस्पष्टजीवादिलिंगकानि वाक्यानि द्वितीय इत्यादि तच्चायुक्तं । द्वितीयेऽपि मनोमयत्वप्राणशरीरत्वादेरत्तृत्वस्य च मनःप्राणादियुक्ते भोक्तरि

जीवे तथा कर्मफलभोक्तृजीवसाहित्येन ब्रह्मणीव बुद्धौ प्राणे वा 'यस्य पृथिवी शरीर'मिते शरीरित्वसाहित्येन अन्तर्यामित्वादेश्च जीवे स्पष्टत्वात् ॥

ननु मनोमयत्वादिकं शुद्धेन मनसा ग्राह्यत्वादिकम् । अत्तृत्वं च संहर्तृत्वम् । तच्च जीवेऽनुपपन्नत्वादस्पष्टमिति चेन्न । मनोमयत्वादेरेवंरूपत्वस्य पूर्वपक्षिणानंगीकृतत्वेनापाततो जीवादिष्वेव स्पष्टत्वात् । सिद्धान्तदशायां च जीवेऽनुपपत्तेः सर्वसाधारण्यात् ॥

ननु मनोमयत्वं न मनःसंबंधमात्रम् । तस्य जीवत्वासाधकत्वात् । किंतु मनःकरणकत्वम् । तच्च तस्मिन्वाक्ये न स्पष्टमिति चेन्न । मनस्संबंधमात्रोक्तावपि तस्य कारणत्वप्रसिद्ध्या तथैव संबंधसिद्धेः । न हि चक्षुष्मच्छब्देन तत्संयुक्तस्याकाशादेः प्रतीतिः ॥

ननु 'मनोमयः प्राणशरीरनेते'त्यादौ वाक्यान्तरे मनोमयत्वादिकं ब्रह्मणि प्रसिद्धमिति जीवादावस्पष्टमिति चेन्न । तृतीयेऽपि द्युभ्वाद्यायतनत्वस्यापि 'एको दाधार भुवनानि विश्वे'त्यादौ वाक्यान्तरे ब्रह्मणि प्रसिद्धेः । तत्र जायमानत्वादिलिंगं जीवे प्रसिद्धं चेदत्रापि 'एष म आत्मान्तर्हृदय'इत्यर्भकौकस्त्वमपि जीवे प्रसिद्धम् । प्रत्युत तृतीये द्युभ्वाद्यायतनत्वं स्वरूपेण 'अमृतस्यैष सेतु' रित्यादिब्रह्मलिङ्गसन्निधानेन च तथा पूर्णत्वरूप भूमत्वमपि स्वरूपेण 'यत्र नान्यत्पश्यती'त्यादि ब्रह्मलिङ्गसन्निधानेन च तथाऽक्षरत्वमपि 'अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिब्रह्मलिङ्गसन्निधानान्न जीवादौ स्पष्टम् । तत्तत्प्रतिपादनच्छायानुसारिणोऽपि न परस्परविरुद्धस्पष्टास्पष्टजीवादिलिङ्गकवाक्यग्रहिर्भावः ॥

ननु तत्तत्प्रतिपादनच्छायानुसारित्वं नाम स्पष्टतरपूर्वपक्षहेतुकत्वमिति चेन्न चतुर्थपादे 'आनुमानिक'मित्यस्य विषये 'महतः परमव्यक्तमव्यक्तात्पुरुषः पर' इति वाक्ये 'ज्योतिरुपक्रमा'दित्यस्य विषये 'अजा'मित्यादिवाक्ये 'न संख्योपसंग्राह्या'दित्यादेर्विषये 'यस्मिन्पंच पंचजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतं' इत्यादिवाक्ये च पूर्वपक्षहेतोरस्पष्टत्वात् ।

तथाहि। न तावत्तत्र प्रधानमस्तीत्येव पूर्वपक्षः। तस्य सिद्धान्तेऽपि सत्वात्। किं त्वीश्वरानधीनं तदस्तीति। न चोक्तविषयवाक्य ईश्वरानधीन प्रधानादिक मस्तीत्यत्र स्पष्टो हेतुरस्ति ॥

यच्चोक्तं द्वितीये सर्वशरीरत्वं तृतीये सर्वात्मकत्वं चतुर्थे तदन्यकार्यात्तच्छ रीरवस्त्वाभावः प्रतिपाद्यत इति। तन्न। द्वितीये 'अन्तर्यामी'त्यत्रैव 'यस्य पृथिवी शरीरं यस्यापः शरीर'मित्यादिना सर्ववस्तूनां प्रत्येकं विशिष्य निय म्यत्वरूपशरीरत्वोक्तेः। तृतीये 'द्युभ्वाद्यायतन'मेतत्रैव 'यस्मिन्द्यौ'रित्यादिना सर्वप्रकारित्वरूपसर्वात्मकत्वोक्तेर्द्वितीयतृतीयस्थाधिकरणान्तरवैयर्थ्यापातात्। द्वितीये 'अदृश्यत्वादिगुणक'इत्यादौ सर्वशरीरत्वस्य तृतीयेऽपि 'भूमे'त्यादौ सर्वा त्मत्वस्याप्रतीतेश्च। श्रुतिसूत्रानुसारेण सर्वगतत्वात्तत्वद्युभ्वाद्यायतनत्वपूर्णत्वा द्यनेकगुणपरत्वसंभवे एकैकस्य पादस्यैकैकगुणमात्रपरत्वायोगाच्च। अतत्कार्य वस्तुनो 'न वियदि'त्यत्र निरसिष्यमाणत्वादतच्छरीरत्वस्य च 'अन्तर्यामी' त्यत्र निरस्तत्वेन चतुर्थवैयर्थ्यात्। चतुर्थस्य समन्वयाध्यायासंगतेश्च। तस्मान्नान्योक्तं पादभेदादिकं युक्तम्। तदेतदभिप्रेत्योक्तं भाष्ये 'नान्यथा तददृष्टे'रिति ॥

अत्र च 'सर्वे वेदा यत्पदमामनंती'त्यादिश्रुत्युक्तस्यापि समन्वयस्य बाधकोद्धारादिना स्थापनार्थमयमध्यायः सफलः। यथा 'स एष यज्ञः पञ्च विधोऽग्निहोत्रं दर्शपौर्णमासौ चतुर्मास्यानि पशुः सोम' इत्यादिश्रुतिसिद्धाग्निहो त्रादिपदनामधेयत्वस्थापनार्थं नामधेयपादः ॥

शास्त्रेऽध्याये तथा पादे श्रुत्याधिकरणेन च।
सङ्गतिः पञ्चधा प्रोक्ता सर्वाधिकरणेष्वपि ॥ १ ॥
तत्र चाद्यत्रिकं प्रायेणातर्भावात्मकं मतम्।
उत्तरं तु द्वयं प्रोक्तमानंतर्यात्मकं सदा ॥ २ ॥
अध्याययोः पादयोरप्यानन्तर्यात्मिकैव हि।
तत्राद्यत्रितयं स्पष्टमस्पष्टं तु परं द्वयं ॥ ३ ॥
द्व्यध्याय्या च द्विपाद्यां च द्विपाद्यां चापि संगतिः।

ऊहनीया यथायोगमिति सङ्गतिसग्रह: ॥ ४ ॥

पेटिकासंगतिस्तु न सार्वत्रिकी। तत्तदधिकरणसङ्गतेस्तत्तदधिकरण विषयवाक्यभूतश्रुतिसङ्गत्याऽविनाभाव एव न त्वभेद इति सा पृथक्। ईक्षत्य धिकरणादे: समन्वयाध्यायादिना सङ्गतेरानन्तर्यरूपत्वेनान्तर्भावरूपत्वाभावा त्तस्या: प्रायिकता। अधिकरणस्याधिकरणान्तरे पादस्य पादान्तरेऽध्यायस्य वाध्यायान्तरेऽन्तर्भावाभावादानन्तर्यमेव नियतं। तत्र शास्त्राध्यायपादसंगतीनां सर्वत्र स्पष्टत्वाद्भाष्ये क्वापि तदनुक्ति:। श्रुत्यधिकरणसंगती त्वस्पष्टे इति ते सर्वत्र भाष्ये वक्ष्येते। एवं पूर्वतन्त्र उपदेशातिदेशविषयत्वेन पूर्वोत्तरषट्कद्वय वदिहाप्यनुव्याख्याने —

'समन्वयाविरोधाभ्यां संजाते वस्तुनिर्णये'

इत्युक्तत्वात्सिद्धरूपविषयसाध्यरूपसाधनफलप्रतिपादकत्वेन पूर्वोत्तरद्विक भेदसंभवात्तत्स्थाधिकरणानां यथायोगं द्विकसङ्गतिरूह्या। एवं पूर्वतन्त्रेऽविनि योगसमुत्थाप्रामाण्यनिरासकत्वेन द्वितीयादिपादत्रयस्यैकार्थत्वेन त्रिपादीत्ववदि हाप्यनुव्याख्याने —

'महासमन्वये तस्मिन्नधिकारोऽखिलस्य ही'

त्युक्तत्वेन चतुर्थपादस्यासर्वाधिकारिकतयाऽऽद्यादिपादत्रयस्य सर्वाधिकारि कत्वेन त्रिपादीत्वसंभवात्तत्स्थाधिकरणानां तत्सङ्गतेः। तथाऽऽद्यादिपाद द्वयस्यान्यत्र प्रसिद्धविषयत्वेन द्विपादीत्वसंभवात्तत्रत्याधिकरणानां तत्सङ्गति रप्यूह्या ॥

आक्षेपिक्यातिदेशिक्यानुपोद्घातापवादते।
प्रसङ्गश्चेत्यादिरूपा सा चानन्तर्यलक्षणा ॥ १ ॥

आनन्तर्यलक्षणापि सङ्गतिराक्षेपिकी आतिदेशिकी आपवादिकी प्रासङ्गिकी इत्यादिरूपेण बहुविधा। आसां स्वरूपमुत्तराधिकरणेषु व्यक्तं भविष्यति ॥

अत्र टीकायां पादसंगत्यर्थे 'आनन्दमयनाम्न' इत्यानन्दमयशब्दस्य

नामत्वमुक्तम् । तत्र केचित्तु द्विदग्निहोत्रादिशब्दानामिवानन्दमयादिशब्दाना यौगिकत्वेऽपि पूर्वपक्षेऽपि कोशादिनामत्वम् । सन्ति ह्यन्वर्था अपि संज्ञा इत्याहुः । तन्न । अत्राभिप्रेतस्य रूढत्वरूपनामत्वस्य यौगिकेऽनुपपत्तेः ! अन्ये त्वानन्दमयादिशब्दाः कोशेषु रूढाः । 'आनन्दमया मे शुध्यता'मित्यादौ कोशेषु प्रयोगबाहुल्यादित्याहुः । तदपि न । पूर्वपक्षे विकारे सिद्धान्ते च प्राचुर्ये यौगिकत्वेन केवलरूढत्वायोगात ॥

अपरे तु आनन्दमयादिशब्दा योगरूढाः । एवं च यान्यापाततो रूढान्येव तानि नामानीति पक्ष आनन्दमयादेर्नामत्वाभावेऽपि यान्यापाततो रूढानि तानि नामानि यानि तु यौगिकानि तानि लिगानीति पक्ष आनन्दमयादि शब्दानामुभयात्मकत्वम् । एवं च यथा 'स्मृत्यनवकाशदोषप्रसङ्ग' इत्यत्र स्मृतिविरोधपरिहारस्य चतुर्विधविरोधपरिहारात्मकत्वेनैकैकविरोधपरिहारपरेषु पादेष्वसंगते. पूर्वं पश्चाद्वा कर्तव्यत्वे प्रथमातिक्रमे कारणाभावात्पूर्वं निवेशः तथास्योभयसमन्वयपरत्वेन पादद्वयेऽसगते पूर्वं पश्चाद्वा कर्तव्यत्वे पूर्वं निवेश इत्याहुः । तन्न । वक्ष्यमाणरीत्या दृष्टान्तस्य दार्ष्टांतिकस्य च तत्तत्पाद सगतिसभवे तद्बहिर्भावायोगात् । तस्मादानन्दमयादीनामुक्तरीत्योभयात्मकत्वात्पादद्वयसमन्वयसगतिसंभवेनेहापि विचारसंभवात्प्रथमातिक्रमे कारणाभावाच्चाद्यपादे तत्समन्वयः । यथा स्मृतिविरोधपरिहारस्याद्यपादे निवेशः तद्वद्यान्यापाततो रूढिरहितानि तानि लिङ्गानि । यानि तु तद्विपरीतान्यापाततो रूढानि वा तानि नामानीति पक्ष आनन्दमयादिशब्दाना नामतैव ॥

तत्वप्रदीपे तु 'आनन्दमयाधिकरणे लिगविचारा'दित्यानन्दमयादेर्लिङ्गत्वमेवोक्तम् । तदनुसारेण 'आनन्दमयनाम्न' इति टीकायामानन्दमयनाम शब्द आनन्दादिनामपरो वा योज्यः । तथा चानन्दादिनामसमन्वयस्यापीह समर्थनात्फलतः पादसंगतिः । यथा पूर्वतन्त्रे पौर्णमास्यधिकरणस्य मुखतो विद्वद्वाक्यमनुवादकमिति व्युत्पादकत्वेऽपि करणेतिकर्तव्यताभेदस्य फलितत्वेन फलतो भेदलक्षणसंगतिः । यथा चात्रैव शास्त्रे 'असदिति चे'दित्यधिकरणस्य मुखतः श्रुत्यविरोधव्युत्पादकत्वेऽपि फलतो युक्त्यविरोधव्युत्पादकत्वाद्युक्तिपाद

संगतिः यथा चान्तरधिकरणस्य मुखतो लिङ्गसमन्वयव्युत्पादकत्वेऽपि फलतो नामसमन्वयव्युत्पादकत्वान्नामपादसंगतिः तद्वत् ॥

यद्यप्यानन्दादिनामसन्वय उक्ते आनन्दमयादिलिङ्गसमन्वयोऽप्यर्थात्सेत्स्यति । पादसंगतिश्च स्वरसा भवति । तथाप्यानन्दमयोदाहरणे विकारशब्दादिपूर्वपक्षबीजस्य तद्योगमित्यादिसिद्धान्तहेतोश्च सत्त्वाल्लिंगस्य मुखतः कीर्तनमिति ॥

इह समन्वयसूत्रप्रतिज्ञातसमन्वयहेतौ वाच्यत्व ईक्षत्यधिकरणेनोक्तेऽध्यायशेषेण प्रतिज्ञातसमन्वय उपपादनीयः । तत्रान्तराद्यधिकरणानामानन्दमयानन्तर्ये हेतोर्वक्ष्यमाणत्वात्सर्वापेक्षितानन्दप्रदोपमनाविषयपूर्णानन्दत्वरूपमहागुणस्य प्रथमं वक्तव्यत्वाच्चानन्तरसंगतिः । यद्वा ईक्षत्यधिकरणोक्त आत्मशब्दाद्गौणत्वनिरासो न युक्तः । अब्रह्मणि गौणात्मन्यानन्दमये 'एतमानन्दमयमात्मान'मिति तच्छ्रवणात् । तथा ब्रह्मनिष्ठस्य मोक्षोपदेशो वा 'पूर्णमेवावशिष्यत' इति पूर्णस्य ब्रह्मणः स्वाप्ययो वा न युक्तः । ब्रह्मण आनन्दमयावयत्वेऽवयविनं विहायावयवनिष्ठाया अवयवपूर्णतायाश्चायोगात् । तथा ब्रह्मणो जिज्ञास्यतायां कारणतायां च यद्गतिसामान्यमुक्तम् तदयुक्तम् । ब्रह्म प्रत्यवयविन आनन्दमयस्य 'सोऽकामयत बहुस्या'मित्यादिना कारणत्वावगतेः कारणस्यैव जिज्ञास्यत्वनियमादिति पूर्वोक्ताक्षेपेण पूर्वपक्षप्रवृत्तेराक्षेपिकी संगतिः ॥

भाष्ये तु विप्रकीर्णनानाशाखास्थवाक्यविनिर्णायकेष्वन्यथापि क्रमहेतोरुत्प्रेक्षासंभवेन नियतपूर्वापरीभावहेतुविशेषशून्येषु चाधिकरणेषु वाचः क्रमवृत्तित्वेन क्रमे सिद्धे येन केनचित्पूर्वाधिकरणेनाक्षेपादिरूपा संगतिरेवापेक्षिता । तावन्मात्रेण चिन्तायाः साफल्यसिद्धेः । न त्वव्यवहितपूर्वेणेति भावेनानन्तरसंगत्यनुक्तिः । अत एवात्र 'जिज्ञासा कर्तव्येत्युक्त'मिति भाष्ये जिज्ञासासूत्रेणैव संगतिर्दर्शिता । उत्तरत्र चाकाशाद्यधिकरणेषु 'को ह्येवान्या'दित्यादिभाष्य आनन्दमयाद्यधिकरणैरेव संगतिर्दर्शयिष्यते ॥

यद्वाऽव्यवहितपूर्वाधिकरणसंगतिः स्फुटत्वाच्छिष्यैरेवोह्येति भावेन भाष्ये तदनुक्तिः । तदुक्तं सुधायां 'उत्तराधिकरणेष्वप्येवं क्रमनिमित्तादिकं

स्वयमूहनीय'मिति । 'जिज्ञासा कर्तव्येत्युक्त' मिति भाष्येण तु चिताफलमा-
त्रमुक्तम् । यद्वा उक्तरूपगतयो भाष्य आनन्दशब्दादियुक्तमहागुणवाचका-
नंदमयशब्दोदाहरणाज्जिज्ञासासूत्राक्षेपेणैव तन्निष्ठसूत्रस्याक्षिप्तत्वाच्च सूचिता
इति तदनुक्तिः । इह गुणिनामान्यवाचका आनंदमयादिशब्दा उदाहरणम् ।
तेन समन्वये सिद्धे ततोऽयादावुदाहृतश्लोकस्थाना गुणवाचिना 'आनंदं
ब्रह्मणो विद्वा'नित्यानन्दादिशब्दानामपि समन्वयः सिध्यति । तदुक्त-
मनुव्याख्याने—

शब्दाना प्रथमे पादे गुणिसामान्यवाचिनाम् ।
गुणवाचिना च प्रथमत्राह देवः समन्वय'मिति ॥

अत्रानंदमयः कि चतुर्मुखादि कि वा विष्णुरिति चिंता । तदर्थं
'अमद्ब्रह्मेति वेद चे'दित्यानंदमये श्रुतो ब्रह्मशब्दः कि जघन्यवृत्तिरुतमुख्यवृ-
त्तिरिति । तदर्थं मयट्प्रत्ययः कि ब्रह्मशब्दस्य मुख्यत्वविरोध्युत नेति ।
तदर्थं मयट् कि विकारार्थ उत प्राचुर्यार्थ इति । प्राचुर्यार्थत्वेऽपि प्राचुर्यं
कि समानाधिकरणविजातीयाल्पत्वेनैव भवति कि वा व्यधिकरणसजातीया-
ल्पत्वेनापीति । आद्ये ब्रह्मणि विजातीयस्य दुःखस्याल्पस्याप्यभावादानंदप्रा-
चुर्यायोगः । द्वितीये तु जीवगतस्य सुखस्याल्पत्वाद्ब्रह्मण्यानंदप्राचुर्यसंभवः ॥

अत्र पूर्वोत्तरपक्षयोर्भाष्यादावेव व्यक्तत्वात्सूत्रे परमतस्यैव पूर्वपक्षि-
तत्वेन परमततन्निरासयोरेवेह पूर्वपक्षसिद्धांतरूपतया पृथक्तयोरभावाच्च न तौ
पृथगुच्येते ॥

यद्यपि जिज्ञासासूत्रे तद्विजिज्ञासस्वेति वाक्यस्थब्रह्मशब्दस्य गुणपूर्तौ
यौगिकत्वेन जीवाद्भेदकतोक्ता । जन्मादिसूत्रे च तस्मिन्नेव वाक्ये कारण-
त्वादिना रूढिं बाधित्वा योगः स्थापितः । तथाप्यानंदमयवाक्ये रूढौ
बाधकाभावात्प्रत्युत विकारशब्दादेस्तत्साधकस्यैव च भावात्पूर्वपक्षोदय इति
द्रष्टव्यम् ॥

अत्र श्रुतावन्नमयस्यादित्वेऽपि सूत्र आनंदमयस्येतरोपलक्षकत्वेनोपादानं
युक्तम् । तत्र जिज्ञासासूत्राक्षेपकस्यावयवत्वादिपूर्वपक्षहेतोः सत्वात् । यथा

चित्राज्याधिकरणे 'आज्यैस्तुवन' इत्युत्पत्तिवाक्यमुपेक्ष्य वाक्यभेदरूपसिद्धान्त-हेतोः सत्वात् 'पंचदशान्याज्यानी'ति गुणवाक्योदाहरणं तद्वत् ॥

अत्र ब्रह्मशब्दाभ्यासो यद्यपि सूत्रोदाहृतमानंदमयं प्रति श्रुत्योदाहृते श्लोके 'असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेदे'ति तथा विज्ञानमयेऽपि 'विज्ञानं देवास्सर्वे ब्रह्म ज्येष्ठमुपासते। विज्ञान ब्रह्म चेद्वेदे'त्यस्ति। न चास दिति श्लोक आनन्दमयपुच्छविषयः। अन्नमयादीन्प्रत्युदाहृतश्लोकानामपि तदीय पुच्छविषयत्वापातात्। अन्नमयप्राणमयमनोमयेषु तु 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते आनन्दं ब्रह्मणो विद्वा'निति ब्रह्मशब्दः सकृदेव श्रुतः। तथापि तन्मात्रेणैव तेषा ब्रह्मता। आनन्दमयविज्ञानमययोस्त्वभ्यासोऽप्यस्तीति स सूत्रितः ॥

अत एव भाष्ये 'तथापि न त आनन्दमयशब्देनोच्यंते। किंतु विष्णुरेव। ब्रह्मशब्दाभ्यासा'दित्युक्त्वा येऽन्नं ब्रह्मेत्यादिब्रह्मशब्दादित्येवोक्तम्। टीकायामपि आनन्दमये ब्रह्मशब्दाभ्यासादित्युक्त्वा 'अन्नमयादीन्प्रत्युदाहृत श्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणा'दित्येवोक्तम्। सुधायां तु —

'येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात्तैतिरीयके'

इत्यनुव्याख्यानानुसारेण 'एकविषयासकृदुक्तिलक्षणमुख्याभ्यासाभावे ऽप्यसकृदुक्तिमात्रमस्ति। तथा चान्नमयादिविषयत्वेन ब्रह्मशब्दस्य श्रुतत्वाभि प्रायोऽभ्यासशब्द' इत्युक्तम् ॥

यद्वा ब्रह्मशब्दवत् 'अन्योऽन्तर आत्मा एतमन्नमयमात्मानमुपसंक्रामति एतमन्नमयमात्मनमुपसक्रम्ये'त्यादौ ब्रह्मशब्दसमानार्थात्मशब्दसद्भावादभ्यासः। भाष्ये तु ब्रह्मशब्दपदेन ब्रह्मवाचकः शब्दो विवक्षितः। अत एव भाष्ये 'पर मात्मे'त्यात्मपदोपेतस्मृत्युपादानम्। यद्वा 'अन्नं ब्रह्मेति व्यजाना'दित्युत्तरानुवाके ऽप्यन्नमयादौ ब्रह्मशब्दसद्भावादभ्यास. ॥

केचित्तु शाखान्तरेऽप्यन्नमयादौ ब्रह्मशब्दसद्भावादभ्यासः। अत एवा-नुव्याख्याने —

'अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः'

इत्युक्तमित्याहुः । तन्न । शाखान्तरमादायाभ्यासेऽतिप्रसंगात् । अनुव्याख्याने—

'येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके । अन्यासु चैतद्रूपा'

स्विति प्रतिशाखमभ्यासोक्तेश्च । न चान्नादेरब्रह्मत्वेऽपि ब्रह्मत्वेनोपासनोपपत्तिरिति शंक्यम् । असदुपासनाया निषेत्स्यमानत्वात् । 'विज्ञानं ब्रह्म चेद्वेद अन्नं ब्रह्मेति व्यजाना'दित्यादावुपासनाया अश्रवणाच्च । एतमानन्दमयमात्मान'मित्यादावुपासनाया अश्रवणेऽपि ब्रह्मसमानार्थात्मशब्दश्रवणाच्च । न च ब्रह्मशब्दोऽन्यत्र युक्तः ॥

प्रवृत्तिहेतुपौष्कल्याद्भाप्यकृद्भिरुदाहृतैः ।
श्रुतिस्मृतिशतैश्चापि ब्रह्मशब्दो हि विष्णुगः ॥

यद्यपि 'तपो ब्रह्मे'त्यसकृच्छ्रवणात्तपस्यपि ब्रह्मशब्दाभ्यासोऽस्ति तथापि पूर्वत्र 'तपसा ब्रह्म विजिज्ञास्वे'ति उत्तरत्र च 'स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजाना दिति चाभ्यासात्तपसि ब्रह्मशदो न मुख्य इति न तपसो ब्रह्मता ॥

यद्यपि,

'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधे'

तिवचनात्तादात्म्ये मयट्स्वीकारे प्रतियोगिनो दुःखस्यैवदनुवृत्त्यादिशंकानवकाशः तथापि 'यतो वाचो निवर्तते को ह्येवान्या'दित्यादिश्रुत्यनुसरेणानंदादेः पूर्णत्वसिद्ध्यर्थं स्वार्थिकत्वे मयटो वैयर्थ्यपरिहारार्थं च प्राचुर्यार्थतोक्ता । अन्नमयादिसाधारणहेतोरभ्यासात्पश्चान्मान्त्रवर्णिकगानादेस्तु पूर्वमानंदमयमात्रासाधारणस्य तद्धेतुव्यपेदशस्य निवेशनन्तु मान्त्रवर्णिकसूत्र आनन्दमयादिस्थब्रह्मशब्दस्य परब्रह्मपरत्वशङ्काया अपि मन्त्रवर्णस्थपरत्वविशेषणेन निरासात् 'अस्मिन्नि'ति सूत्रे च भेदस्य मुक्तावपि सत्त्वेनापारमार्थिकत्वशङ्काया अपि निरासात्तदनन्तरं तद्धेतुव्यपदेशोक्तौ तन्निरासेऽपि तद्धेतुव्यपदेशो हेतुरिति शंका स्यात् सा मा भूदित्येवमर्थम् । न चैवमप्यभ्यासं तद्धेतुव्यपदेशं च साधकमुक्त्वानन्तरं 'विकारशब्दा'दिति बाधकमुद्धर्तव्यमिति शक्यम् । 'को ह्येवान्या'दिति तद्धेतुव्यपदेशस्यानन्दमयस्य विष्णुत्व इव प्राचुर्यं मयडर्थ इत्यत्रापि हेतुत्वात् 'अस्मि'

न्निति सूत्रस्य स्वपक्षसाधकत्वेऽपि 'नेतरः भेदव्यपदेशात्' इत्याभ्यां सूत्राभ्यां पर पक्षे बाधकोक्तौ भेदस्यापारमार्थिकत्वशंकानिरासेन परपक्षे बाधकत्वस्यापि सत्त्वा त्तदानन्तर्यम् । तथा 'भेदव्यपदेशा'दित्यस्यानन्तर भेदवदभेदोऽपि प्रमाणिकः तत्र प्रत्यक्षस्यासम्भवेऽपि 'श्रुतेश्च तद्गुणसारत्वा' दित्यत्रान्यपरताया वक्ष्यमाणत्वेऽपि जगत्कारणस्य शास्त्रयोनित्वेऽपि तत्सार्वज्ञादौ सर्वकर्तृत्वादेरिव विमता आत्मानः परमात्मनो न भिद्यंते आत्मत्वात्परमात्मवदित्याद्यनुमानस्य संभवादिति परपक्ष साधकशङ्कायां श्रुत्यादिसाहाय्यरहितं तद्विरुद्धं चानुमानमप्रमाणमतिप्रसंगादिति 'कामा'दिति सूत्रेण निरस्ताया अनन्तरं भेदश्रुत्यभेदानुमानयोरपारमा र्थिकपारमार्थिकविषयत्वादविरोध इति या शङ्का तस्या अपि 'अस्मि'न्निति-सूत्रेण निरासात्तस्यांत्यत्वम् ॥

यद्यपि नेतर इत्यत्रानुपपत्तेरित्यनेन हिरण्यगर्भादिजीवानामानन्दमयत्वे तज्ज्ञानान्मोक्षानुपपत्तिरिव हिरण्यगर्भादीनामानन्दमयाद्भेदव्यपदेशानुपपत्तिरपि विवक्षितु शक्या तथापि जीव एवानन्दमयो न ब्रह्मेति वदता पूर्वपक्षिणा पूर्वं स्वांगीकृतं जीवब्रह्मभेदं त्यक्त्वा जीवानामानंन्दमयत्वेऽपि जीवचैतन्यस्य ब्रह्मचैत न्याभेदाज्जीवतत्त्वज्ञानेनापि मोक्षोपपत्तिरिति प्रकारान्तरेण शंकिते तच्छकाया अपि जीवानन्दमययोरिव जीवब्रह्मणोरपि भेदं कथयता 'भेदव्यपदेशा'दित्यनेन निरासाय भेदव्यपदेश· पृथगुक्तः । अत एव भेदेति सूत्रमत्र टीकायां हिरण्यगर्भादिजीवानामानन्दमयत्वनिरासकतया व्याख्याय सुधायां जीवब्रह्मा भेदनिरासकतया व्याख्यातम् । अत एव च कामादिति सूत्रे जीवब्रह्माभेदानु माननिरासः भाष्ये च न च तत्त्वमसीत्यादिना जीवब्रह्माभेदश्रुतिगत्युक्तिः अनुव्याख्याने च —

'न जीवभेदसूत्राणां शक्यात्र पुनरुक्तता ।
वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णता' ॥

इति भेदेत्यस्य सूत्रस्यातरधिकरणादिस्थैः 'भेदव्यपदेशाच्चान्य' इत्या दिभिर्जिवेश्वराभेदनिरासकैः पौनरुक्त्यशंकासमाधानं च सगच्छत इति ॥

**अन्ये तु** आनन्दमयतदवयवपुच्छयोर्द्वयोर्ब्रह्मत्वायोगादेकस्य ब्रह्मता

वाच्या । तत्रानन्दमयस्य ब्रह्मत्वे विकारार्थमयटः प्रायपाठत्यागः प्राचुर्यस्यापि प्रतियोग्यल्पत्वापेक्षत्वाद्ब्रह्मणि च दुःखलेशस्याप्यभावान्मयटः स्वार्थत्यागः । पुच्छवाक्यगतब्रह्मशब्दस्य च गौणार्थत्वं सैषाऽऽनन्दस्य मीमांसेत्यादावभ्यस्यमानानन्दप्रातिपदिकेन मयडर्थो लक्ष्यते इति चत्वारो दोषाः । पुच्छस्य ब्रह्मत्वे त्ववयवप्रायपाठबाधमात्रम् । पुच्छपदमुख्यार्थत्यागस्त्वानन्दमयस्य ब्रह्मत्वपक्षेऽपि समः । लाङ्गूले मुख्यस्य तस्यानन्दमयावयवेऽपि गौणत्वात् । तस्मान्मयट्प्रत्ययब्रह्मशब्दानन्दप्रातिपदिकरूपमुख्यत्रितयानुगुण्यात्पुच्छमेव ब्रह्मेति युक्तम् । पुच्छपदं तु प्रतिष्ठापदसन्निधानादाधारलक्षकम् । तदुक्तं भामत्यां —

प्रायपाठपरित्यागो मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधन'मिति ॥

किंच प्रियाद्यवयवयोगेनानन्दमयः सविशेषः । ब्रह्म तु निर्विशेषम् । अपि चानन्दमयः प्रतिशरीरं प्रियादिभेदाद्भिन्नः । ब्रह्म त्वभिन्नम् । तस्मादानन्दमयो न ब्रह्म । किंतु पञ्चापि कोशाः । न च सर्वान्तरत्वादानन्दमयो ब्रह्म । पुच्छवाक्ये ततोऽप्यन्तरस्य प्रतिष्ठापदेनोक्तेः । या तु भार्गवी वारुणी विद्या तस्या मयटः प्रियशिरस्त्वादेश्चाश्रवणाद्युक्तमानन्दस्य ब्रह्मत्वमिति सिद्धान्तः । सूत्राणि तु—

'वेदसूत्रविरोधे तु गुणे त्वन्याय्यकल्पने'

तिन्यायेनान्यथा व्याख्येयानीत्याहुः । **तन्न** । यतः—

एकत्रापि न मुख्यार्थलङ्घनं मामके मते ।
सर्वत्रापि च मुख्यार्थलङ्घनं तावके मते ॥ १ ॥

**तथा हि** । आनन्दमयपुच्छयोर्द्वयोरपि पूर्णत्वेन ब्रह्मशब्दस्तावन्मुख्यः । पूर्णत्वं हि ब्रह्मशब्दस्य मुख्यार्थः । यथा धर्मांतरेष्वदृष्टमपि जातिसमवायादौ धर्मितोऽधिकदेशत्वं यथा वा परिच्छिन्नेनाक्रियमाणसम्बन्धिनावृतेष्वन्येष्वदृष्टमपि परिच्छिन्नाज्ञानावृते निरंशे चैतन्येऽपरिच्छिन्नत्वं यथा वाऽऽनन्दांतरेष्वदृष्टमपि ब्रह्मानन्दस्य पूर्णत्वादिकं तथान्यत्रादृष्टमप्यवयवस्य पूर्णत्वं विचित्रशक्तियुक्त

ब्रह्मावयवेऽस्तु। उक्तं च 'विश्वतश्चक्षुः पूर्णमदः पूर्णमिद'मित्यादिश्रुत्या 'सर्वतः पाणिपादन्त'दित्यादिस्मृत्या चावयवस्य पूर्णत्वम्। तथा 'उद्धबर्हात्मनः केशौ' इत्यादि स्मृत्या केशस्य कृष्णस्य 'व्याप्तं त्वयैकेन दिशश्च सर्वा'इति पूर्णतोक्ता। तदुक्तमनुव्याख्याने—

'ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वतः।
यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताखिला॥
दर्शिता चैव पार्थाय निस्सीमा· शक्तयोऽस्य हि'इति॥

युक्तं चानवस्थापरिहाराय क्वचित्संबन्ध्यादेरिव सबन्धत्वादिवदस्मिन्नेव प्रकरणे 'आनन्दं ब्रह्मण' इति श्रुतेरानन्दात्मकस्यैव ब्रह्मण आनन्दित्ववच्च विशेषबलाच्छक्तिव्यक्तिभावात् 'स शिरः स दक्षिणः पक्ष·'इत्यादि श्रुत्यावयविन एवावयवत्वम्॥

तदुक्तं **न्यायविवरणे** 'न चावयवत्वविरोधः। नेह नानास्ति किंचने त्यादिश्रुतेरवयवाद्यभेदा'दिति। अन्नमयादावपि प्राचुर्यार्थत्वस्य भाष्य एवोक्तत्वान्न प्रायपाठत्यागः। प्राचुर्यस्य प्रतियोग्यल्पत्वापेक्षत्वेऽपि न प्रतियोगिनः सामानाधिकरण्यनियमः। यतः प्राचुर्यस्य विजातीयसमानाधिकरणाल्पं यथा तथा सजातीयविभिन्नाधिकरणाल्पं निरूपकम्। दृश्यते हि ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेनेव प्रचुरप्रकाशः सवितेत्यादौ व्यधिकरणस्य सजातीयस्य नक्षत्रादिप्रकाशस्याल्पत्वेनापि प्राचुर्यम्। प्रकृते च 'सैषाऽनंदस्ये'त्यादिश्रुत्यैव व्यधिकरणस्य सजातीयस्य जीवानंदस्याल्पत्वमुक्त्वा ब्रह्मानंदस्य 'यतो वाच' इति महत्त्वमुक्तम्॥

यत्तु प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिप्रतीतिनियमाभावेऽपि विशेष्यत्वे तन्नियमः। ब्राह्मणप्रचुरो ग्राम इत्यादौ दर्शनात्। आनंदमय इत्यत्र च प्राचुर्यं विशेष्यमिति **कल्पतरूक्तम्**। तन्न। प्रकाशप्रचुरः सवितेत्युक्तेऽपि तस्मिन्नंधकारलेशाप्रतीतेः। 'अंतःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यंति यतयः क्षीणदोषाः। य एषोंऽतर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः प्रज्ञानघन एवानंदमयः' इत्यादौ त्वन्मतेऽपि ब्रह्मण्यपि विज्ञान

मयादिशब्दप्रयोगाच्च । न चात्र प्राचुर्यार्थत्वसंभवे वैयर्थ्याच्छादकं स्वार्थिकत्वं युक्तम् । ब्राह्मेण प्रचुर इत्यादावपि प्रचुरशब्दो महत्वमात्रमाह । विरोधिप्रतीतेस्तु मानातरात् । सैषाऽऽनंदस्येत्यादावानंदपदं न प्राचुर्यलक्षकम् । किं त्वानंदमात्रपरम् । अन्यथा 'ते ये शत'मिति तारतम्योक्त्ययोगात । 'आनंदं ब्रह्मण' इत्यत्र त्ववाङ्मनसगोचरत्वेनानंदस्य प्राचुर्यसिद्धिः । 'यदेष' इत्यत्रापि सुखरागस्य दुःखद्वेषस्य दुःखोद्रेकस्य च प्रवृत्तिहेतोर्भगवत्यसंभवेन सृष्ट्यादिप्रवृत्त्यन्यथानुपपत्त्यानंदोद्रेके सिद्धे महाप्रवृत्त्या महानंदोद्रेकसिद्धिः । न त्वानंदशब्दस्य प्राचुर्यलक्षकत्वेन । न चास्मकं भास्करादीनामिव 'सैषाऽऽनंदस्ये'त्यादावानंदपदाभ्यासो हेतुः । येनानंदमात्रस्य जीवेऽपि संभवात्तदभ्यासस्य ब्रह्मत्वासाधकतया प्राचुर्ये लक्षणा स्यात् । किंतु ब्रह्मपदस्य । सविशेषत्वं तु ब्रह्मपरपाठकम् । न च 'यतो वाचो निवर्तंत' इति श्रुतिर्निर्विशेषत्वमाह । किं त्ववाङ्मनसगोचरानंतविशेषवत्त्वम् । प्रियादिके च यः प्रतिशरीरं भिन्नो नासौ भगवतोऽवयवः । यश्चावयवो न स भिन्नः । विस्तृतं चैतत्तैत्तिरीयकभाष्ये भगवत्पादैः ॥

किंच 'सोकाऽमयते'त्यत्र पुंलिंगेन सन्निहितपरामर्शिना तच्छब्देन नपुंसकब्रह्मपुच्छशब्दनिर्दिष्टस्य 'तस्माद्वा एतस्मादात्मन' इति व्यवहितात्मशब्दनिर्दिष्टस्य च परामर्शायोगेन सन्निहितस्यानंदमयस्यैव परामर्श्यत्वात् 'सोऽकामयते'त्यस्य च कारणवाक्यस्य त्वयापि ब्रह्मपरत्वेनांगीकृतत्वात्कथमानंदमयस्याब्रह्मता ॥

अपि चानुवाकात उदाहृतो 'यतो वाच' इति श्लोक एव मनोमयेऽपि श्रुत्योदाहृतः । तस्य च 'आनंदं ब्रह्मण' इति ब्रह्मश्रुत्या 'यतो वाचो निवर्तंते न बिभेति कुतश्चने'ति लिंगाच्च ब्रह्मविषयत्वं त्वयापि स्वीकृतमितिकथं मनोमयस्याब्रह्मता । न च यथा परमते 'असन्नेव'ति श्लोक आनंदमयपुच्छविषयस्तथाऽयमपि मनोमयपुच्छविषय इति वाच्यम् । 'अथर्वांगिरसः पुच्छं प्रतिष्ठे'त्युक्तमनोमयपुच्छस्य ब्रह्मत्वानंगीकारात् ॥

किंचान्नमयादीनामब्रह्मत्वे ब्रह्मजिज्ञासोस्तदुपदेशायोगः । द्वारमपि

द्वारत्वेनैवोपदेष्टव्यं न स्वात्मतया। लोके हि चंद्रारुंधत्यादौ शाखास्थूलतारादिकं द्वारत्वेनैवत्रोदिश्यते। न चात्रं ब्रह्मेत्यनुक्त्वानंदो ब्रह्मेति वक्तुमशक्यम्। येन द्वारत्वं स्यात्। न च 'सत्यं ज्ञान'मिति स्वरूपलक्षणेन ब्रह्मोपदिश्य पुनस्तस्य देहादिरूपताभ्रान्तिमुत्पाद्य पुनरपि पुच्छवाक्येन तदुपदेशोऽर्थवान्। न च द्वारोपदेशश्चित्तस्य प्रत्यक्प्रावण्यार्थः। कोशानां पराक्त्वात्। परागुपदेशेन च प्रत्यक्प्रावण्येऽतिप्रसङ्गात्। प्रत्यक्त्वेनारोपस्याप्यानन्दमये उत्तरानुवाकोक्तान्नादौ चाभावात्। तत्रत्यानामन्नादीनामन्नमयादित्वे च तत्रत्यस्त्वया ब्रह्मत्वेन स्वीकृत आनन्दोऽप्यानन्दमयः स्यात्। स्थानप्रमाणात्। न चाज्ञातधर्मतत्वं चैत्यवन्दनादि धर्म इति मन्वानं प्रति चैत्यवन्दनादि धर्म इत्युपदिश्य ज्योतिष्टोमादि धर्म इत्युपदिश्यते। न च त्वन्मतेऽपरिच्छिन्नस्यात्मनः शरीराद्यन्तरत्वमहंत्वरूपं प्रत्यक्त्वं वाऽस्ति। न च घटाकाशादिज्ञानोपायोऽपि घटादिर्महाकाशज्ञानोपायः। इह च 'सत्यं ज्ञानमनन्त'मिति प्रकृतोऽपरिच्छिन्न एवात्मा जिज्ञापयिषित इति तेऽपि मतम्। किंच निरवयवे चित्तप्रावण्यार्थं निरवयवान्तरमेवोपदेष्टव्यम्। न तु 'अयं दक्षिणः पक्ष' इति सावयवम्॥

अपि च न तावदन्नादीनामन्नमयादीना वा प्राणादीन्प्राणमयादीन्वा प्रति द्वारत्वम्। अन्नादिज्ञानं विनापि प्राणादिज्ञानात्। ब्रह्मणि द्वारत्वेऽन्नादिपूर्वकं प्राणाद्युपदेशो न युक्तः। अनेकद्वारवैयर्थ्यं च। न च द्वारविकल्पः। उत्तरानुवाके 'अन्नं ब्रह्मेति व्यजानात् प्राणो ब्रह्मेति व्यजानात् मनो ब्रह्मेति व्यजाना'दित्यादिनान्नप्राणादिद्वारसमुच्चयोक्तेः॥

अपि च 'यतो वे'त्यादिपूर्ववाक्योक्तकारणत्वस्यापि त्वत्पक्षे ब्रह्मणि द्वारत्वात्कोशोपदेशवैयर्थ्यम्। किंच भृगुर्वरुणोपदिष्टानां द्वारत्वं न वेत्ति चेद्विरोचनस्येव पुनरुपसत्त्ययोगः। वेत्ति चेन्नान्न ब्रह्मेति व्यजानात् नान्नाद्ध्येवेत्यादि श्रूयेत। तस्मादन्नमयादयो ब्रह्मैव न कोशाः। अत्रावशिष्टं 'आत्मन आकाश'इत्यादौ 'अन्नात्पुरुष' इत्यंते वाक्ये हरेरप्याकाशादिनियामकरूपप्रादुर्भावलक्षणजनेरुक्तत्वात् 'स वा एष पुरुषोऽन्नरसमय' इत्यत्र हरेः परामर्शं

स्वारस्यम् । तथा परेणापि ब्रह्मपरतया स्वीकृतेन 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'तिर सशब्देन सहितिनितपरामर्शस्यैतच्छब्देनैव सिद्धेर्व्यर्थवहिनाकाशादिकारणब्रह्मपरमर्शिना तच्छब्देन च विशेषणात्प्रकृतान्नमयपरत्वाभावः । तथा 'भृगुर्वै वारुणि'रित्युत्तरानुवाक उक्तानामन्नादीनां ब्रह्मत्वं तावदुपेयम् । भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिते'ति श्रुत्या स्वयमेव ब्रह्मपरत्वोक्तेः । 'अधीहि भगवो ब्रह्मे'ति ब्रह्मप्रश्नोत्तरत्वात् । 'स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजाना'दिति श्रवणानन्तरभाविनिदिध्यासनाख्यतपसापरोक्षीकृतत्वलिङ्गात् । 'अन्नं ब्रह्मे'त्यादिब्रह्मशब्दात् 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादि ब्रह्मलक्षणाच्च । तत्समाख्यया चात्राप्यन्नमयादीनां ब्रह्मत्वम् ॥

न च तत्र मयटो श्रवणाद्भिन्नविषयत्वम् । तत्रापि एतमन्नमयमात्मानमुपसंक्रामती'त्यादौ 'एतमानन्दमयमात्मानमुपसंक्रामती'त्यन्ते मध्ये तथा 'एतमन्नमयमात्मानमुपसंक्रम्ये' त्यदौ 'एतमानन्दमयमात्मानमुपसंक्रम्ये'त्यन्त उपसंहारे च तच्छ्रवणात् ।'अन्नाद्वै प्रजाः प्रजायन्त' इत्यादौ तदश्रवणात् । तत्राप्यन्न(उभयत्राप्यन्न)मयादीनामब्रह्मत्वे 'एतमन्नमयमात्मानमुपसंक्रामती'त्यात्मशब्दस्य मुक्तप्राप्यत्वस्य चायोगात् । न चोपसंक्रम्येत्यत्रोपशब्दोऽतिक्रमार्थः । अव्ययानामनेकार्थत्वस्यापि प्रयोगानुसारित्वात् । अन्यथान्तरशब्दो बहिरर्थस्स्यात् । 'अस्माल्लोकात्प्रेत्ये'त्यनेनैव शरीराख्यान्नमयत्यागस्योक्तत्वेन 'अन्नमयमात्मानमुपसंक्रामती'त्यनेनापि तदुक्तौ पुनरुक्तिश्च स्यात् । अविरुद्धं चान्नादिशब्दैरन्नमयादिप्रत्यायनं 'ज्योतिषा यजेते'त्यत्र ज्योतिश्शब्देन ज्योतिष्टोमस्येव ॥

अन्नादीनां ब्रह्मत्वेऽपि 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेती'ति पुनरुपसत्तिस्त्वेकं रूपं निदिध्यासनेन साक्षात्कृत्य रूपान्तरस्य गुणान्तरविशिष्टतया निदिध्यासनार्थमनुज्ञामादातुम् । तत्रानुजानीहीति वक्तव्ये यदधीहीत्याह तद्विनयातिशयादित्यादिकमुत्तरप्रस्थानादवगन्तव्यम् । 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ता'मिति शुद्धिप्रार्थनवाक्ये तु ब्रह्मशब्दाभावात् तल्लक्षणाभावात् ज्ञानिनस्तत्प्राप्तिकथनाभावात् रसशब्देन विशेषणा

भावेन 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योति'रित्यादाविव संज्ञाभेदात् कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यादाविव प्रकरणभेदात् शुद्धिप्रार्थन लिङ्गाच्चान्नमयादयो न ब्रह्म । किंतु कोशाः । अत्र तु कोशांतर्गतभगवन्मूर्ति विशेषाः । अन्योऽन्तर इत्यन्यत्वान्तरत्वाद्युक्तिस्तु अधिष्ठानभूतकोशानामन्य त्वात् आन्तरत्वात् भगवतो बहुरूपत्वात् । विशेषसद्भावात् 'अनन्योऽप्यन्य शब्देने'त्यादिभाष्योदाहृतस्मृतिबलाच्च युक्ता । तस्मात् श्रुतिविरोधाभावान्न सूत्राण्यन्यथा नेयानि ॥

अनन्तशाखातत्त्वार्थविदा सूत्रकृतेरितम् ।
कूपमंडूकवत्स्वल्पवाक्यज्ञोऽन्यथयेत्कथम् ॥ १ ॥

उक्तं च ब्रह्मसूत्राणां निश्चितत्वम् —

ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितै'

रित्यादौ । सूत्रास्वारस्यं तु परैरेव स्वीकृतम् ॥

यच्चोक्तं शुद्धब्रह्मपरमेतदिति । तन्न । 'कामा'दीत्यादिसूत्रे सोऽका मयत भीषास्मा'दित्यादिश्रुतौ च कामादिगुणविशिष्टस्यैवोक्तेः । किंच निर्वि शेषज्ञानस्य सविशेषज्ञानाधीनत्वादादौ निर्विशेषोक्तिरयुक्ता । अत्र च 'भेदव्य पदेशा'दित्यनेनैक्यनिषेधादभेदप्रतिकूलता स्फुटैवेति ॥

केचित्तु 'तस्यैष एव शारीर आत्मे'ति शारीरत्वेन जीव एवानन्दमय इति प्राप्ते 'सैषाऽऽनन्दस्ये'त्यारभ्य निरतिशतदशाशिरस्कस्यानन्दस्याभ्यासात्तस्य चानन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवेऽनुपपत्तेस्तदाश्रय आनन्दमयः पर मात्मा । विज्ञानमयस्तु जीवः । अन्नमयादयस्तु त्रयः कोशा इति सिद्धान्त इत्याहुः । तन्न । पूर्वपक्षिणापि जीवतयानङ्गीकृतप्राणमयादिसाधारणेन शारीरत्वेन जीवत्वशङ्कानुदयात् । श्रूयते हि प्राणमयादावपि 'तस्यैष एवे'ति शारीरत्वम् ॥

सिद्धान्तोऽप्ययुक्तः । आनन्दमयस्य ब्रह्मत्वे ब्रह्मणः पुच्छत्वाद्यनु पपत्तीनामपरिहारात् । ब्रह्मस्वरूपमेव शिरःपक्षपुच्छादिना रूप्यत इति चेत् रूपणं यद्यध्यासस्तर्हि श्रुतेरप्रामाण्यमतिप्रसङ्गश्च । यदि तु सदृशतयोक्तिस्तदा

मुख्यार्थत्यागस्य दृश्याभावाच्च । न हि ब्रह्मस्वरूपं शिरआदिमद्दृशम् । किंच विज्ञानमयस्य जीवत्वे 'विज्ञानं देवा सर्वे ब्रह्म ज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुत'इत्यादेरयोगः । 'विज्ञानं यज्ञं तनुते' इत्यादिकं तु ब्रह्मणः सर्वकर्तृत्वात् 'यज्ञभृद्यज्ञकृद्यज्ञी' त्यादेश्च युक्तम् । अन्नमयादेः कोशत्वं च निरस्तम् ॥

नन्वानन्दमयाद्युपदेशानन्तरं 'अन्योऽन्तर आत्मे'त्युक्तेरानन्दमयोपदेशानन्तरं तदनुक्तेरानन्दमय एव ब्रह्म न त्वन्नमयादय इति चेत् तर्हि छान्दोग्ये 'यो वै भूमा तत्सुख'मिति भूमोपदेशानन्तरं 'अथात आत्मादेश' इत्युक्तेस्तदनन्तरं चान्यानुक्तेर्भूमा ब्रह्म न स्यात् । 'यत्र नान्यत्पश्यति' इत्यादिब्रह्मलिङ्गाद्भूम्नो ब्रह्मत्वे त्वन्नमयादिरपि ब्रह्मशब्दाभ्यासादिना ब्रह्मास्तु ॥

ननूत्तरानुवाकेऽन्नप्राणमनोविज्ञानज्ञानानन्तरं 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससारे'ति पुनरुपसत्तिवत् 'आनन्दो ब्रह्मेति व्यजाना'दित्यानन्दज्ञानानन्तरं पुनरुपसत्तेरभावादानन्दस्य ब्रह्मत्वात् अन्नप्राणमनोविज्ञानानन्तरं श्रुतेनानन्देनान्नमयप्राणामयमनोमयविज्ञानमयानन्तरं श्रुतस्यानन्दमयस्य स्थानप्रमाणेनाभेदादानन्दमय एव ब्रह्म । अन्नमयादयस्तु तद्द्वारभूता इति चेन्न । अन्नादीनां द्वारत्वेऽपि पुनरुपसत्त्ययोगस्योक्तत्वात् ॥

किं चैवं छांदोग्ये 'यथा सोम्य मधु मधुकृतो निस्तिष्ठंती'त्यादेरनन्तरं 'भूय एव मा भगवान्विज्ञापयत्वि'ति श्रवणात्तत्रोक्तमब्रह्म 'पुरुषं सोम्योत हस्तगृहीत'मित्यादेरनन्तरं तदश्रवणात्तत्रोक्तमेव ब्रह्म स्यात् । 'यथा सोम्य मधि'त्यादौ 'ऐतदात्म्यमिदं सर्व'मित्यादिब्रह्मलिङ्गादिना तत्रोक्तस्य ब्रह्मत्वे त्वत्रापि 'अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानिभूतानि जायंते' इति ब्रह्मश्रुत्यादिनाऽन्नादिकमपि ब्रह्मास्तु ॥

किंचाद्यसूत्रे यदि भास्करमत इवानन्दमात्राभ्यासो हेतुस्तदा ब्रह्मत्वसिद्धिः तस्य जीवेऽपि सम्भवात् । निरतिशयत्वविशिष्टस्य चाभ्यासोऽसिद्धः । शतगुणितोत्तरक्रमेण गुणितत्वं तु नाभ्यासशब्दस्याभिधेयम् ॥

यत्तु ब्रह्मशब्दाभ्यासो हेतुरिति यादवप्रकाशीयं मतं तदप्ययुक्तम् । तन्मते ब्रह्मत्वेनानङ्गीकृतविज्ञानमयादावपि ब्रह्मशब्दाभ्यासस्य सत्त्वात् । द्वितीयसूत्रं चायुक्तम् । प्रायपाठबाधात् ॥

ननु प्राणमय एव विकारार्थत्वं त्यक्तमिति चेत्तर्हि तत्र मयटः स्वार्थिकत्वाद्वैयर्थ्यम् । विज्ञानमयेऽपि तत्प्रसंगश्च ॥

यच्चोक्तं विज्ञानमये मयटः संबंधोऽर्थः । वैयर्थ्यादप्यमुख्यार्थत्वस्य न्याय्यत्वादिति तन्न । अन्नमये विकारार्थः प्राणमयमनोमययोः स्वार्थिको विज्ञानमये संबंधार्थ आनन्दमये प्राचुर्यार्थ इति वैरूप्यप्रसंगात् । न च प्राणमयादावपि संबन्धार्थता । प्राणादेः प्राणादिसंबन्धाभावात् । प्राणशब्दस्याप्रसिद्धार्थत्वे तु वरं परमात्मपरत्वम् । एवं सूत्रान्तरेष्वप्यनुपपत्तिरूह्या । तस्मात्

ब्रह्मशब्दात्स्वमस्तात्सूत्त्वादिलिङ्गाच्च वाक्यतः ।
पूर्वोत्तरस्मान्मन्त्रस्थब्रह्मप्रकरणादपि ॥ १ ॥
भृगुवल्लीसमाख्यानान्मुक्तगीतावसानकात् ।
स्थानप्रमाणतश्चैव पञ्चानां ब्रह्मता स्थिता ॥ २ ॥

उक्तं हि तैत्तिरीयभाष्ये—

शन्नो मित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् ।
मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दन'

इत्यस्य स्थानस्य ब्रह्मपरत्वम् । तथा—

ब्रह्मप्रश्नोत्तराद्ब्रह्मलक्षणाद्ब्रह्मशब्दतः ।
विज्ञावत्वाच्च तपसा मुक्तगम्यत्वतस्तथा ॥ १ ॥
वाधूलीयसमाख्यानादनुव्याख्यानिरूपितात् ।
भृगुवल्ल्युदितस्यान्नप्राणादेर्ब्रह्मता स्थिता ॥ २ ॥

उक्ता ह्यनुव्याख्याने समाख्या —

'तच्च वाधूलशाखायामष्टरूपमुदाहृत'मिति ॥

एवं च यथा 'दाक्षायणयज्ञेन यजेत साकं प्रस्थानीयेन यजेते'त्यादौ दाक्षायणयज्ञसाकंप्रस्थानीयादिशब्दाः प्रकृत एव दर्शपूर्णमासयाग आवृत्त्यादि

गुणविध्यर्थो न तु ततोऽतिरिक्तकर्मविधिपराः यथा वा भूमाधिकरणे ब्रह्मत्वेन निर्णीतात् 'सत्य त्वेव जिज्ञासितव्य'मिति च्छान्दोग्योक्तात्सत्यादुपरि श्रुताः 'विज्ञानं त्वेव विजिज्ञासितव्यं मतिस्त्वेव विजिज्ञासितव्ये'ति विज्ञानमतिश्रद्धा निष्ठाकृत्यादिशब्दाः पूर्वोक्तसत्याख्ये ब्रह्मणि गुणविध्यर्थाः न तु वस्त्वन्तर पराः। एवमन्नमयादिशब्दा अपि प्रकृते ब्रह्मणि सर्वोपजीव्यत्वादिगुणविशेष विधानार्थाः न तु वस्त्वन्तरपरा इति ब्रह्मैव नारायणवासुदेवाद्याख्यानन्द मयादिपञ्चरूपमिति ॥

टीकाक्षरार्थस्तु — श्रुत्यधिकरणसङ्गती दर्शयतीति ॥ येन केन चिदपूर्वाधिकरणेन तद्विषयश्रुत्या च सङ्गतिरेवापेक्षितेत्याद्यसूत्रेण तद्विषयवाक्येन चाक्षेपिकी सङ्गतिरस्तीत्यर्थः। यद्वाऽत्र पूर्वपक्षे आद्यसूत्रतद्विषयवाक्योक्त जिज्ञासाक्षेपात्सिद्धान्ते च तत्समाधानात्तत्सङ्गती स्त इति प्रयोजनवानयं विचार इत्यर्थः। अत एवोत्तरत्र टीकायां 'किमर्थमानन्दमयस्य विष्णुत्वसमर्थन'मिति प्रश्नः 'ब्रह्मजिज्ञासासिद्ध्यर्थ'मिति परिहारश्च। एवमुत्तरत्रापि सङ्गतिटीका द्विधा व्याख्येया ॥

तस्माद्भूत इति ॥ शरीरिस्थानीयात्तदंतगन्नारायणाख्यादानंदमया-च्छरीरस्थानीयो बाह्यो वासुदेवाख्यो विज्ञानमयः प्रादुर्भूत इत्यर्थः ॥ इन्द्रबृहस्पत्यादीनामपि सूर्याधिष्ठातृत्वादिनेति ॥ तेषां सूर्यादुत्तमतया तन्नियामकत्वेनावस्थानं तदधिष्ठातृत्वम्। आदिशब्देन 'स एक इंद्रस्यानंदः स एको बृहस्पतेरानंदः' इतींद्रश्रुत्यादिकं विवक्षितम् ॥

आनंदप्रचुर इति यदुच्यत इति ॥ प्राचुर्यस्य विशेषणताया मनानंदाप्राप्तेः परैरप्यंगीकृतत्वात् 'प्रचुरानंदत्वा'दिति वदता भाष्यकृता यथा प्राचुरानंद इत्युक्तावनानंदाप्राप्तिस्तथा श्रुतिसूत्रानुसारेणानंदमय इति प्राचुर्यस्य विशेष्यत्वेनोक्तावपि तदप्राप्तिः। प्रकाशप्रचुरोरविरित्युक्तेऽपि सवित र्यंधकारलेशाप्रतीतेरिति सूचितमित्यर्थः ॥ ननु विसृतकंठमणिरिति सिद्धांत ग्रंथे नन्वित्यस्य इत्येवोच्यते नन्वित्यन्वयः ॥

विमतानि शरीराणीति ॥ शरीरत्वहेतोर्जीवानामन्योन्यमभेदसाधकत्वेऽपि विशिष्टरूपस्याभेदायोगेन शुद्धस्य शुद्धेनाभेदे वक्तव्ये शुद्धस्यैव ब्रह्मत्वाद्ब्रह्माभेदोऽपि सेत्स्यतीति भावः ॥

॥ इत्यानन्दमयाधिकरणम् ॥

[ अन्तस्स्थत्वाधिकरणम् ]

## 7 – ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ १-१-७ ॥

अत्रांतस्स्थत्वलिंगसमन्वयस्याधिदैवगतेन्द्रादिनामसमन्वयार्थत्वात्पादसंगतिरिति टीकायामेवोक्तम् । अनंतरसंगतिस्तु आनंदमयधर्मस्यादृश्यत्वस्यांतस्स्थे श्रवणादंतस्स्थस्य चाविष्णुत्वादानंदमयोऽपि न विष्णुरिति पूर्वसिद्धांताक्षेपेणेह पूर्वपक्षोत्थानादाक्षेपिकी । इयं च 'अदृश्येऽनात्म्ये' इत्यादिभाष्य एवोक्ता । न चैतद्भाष्यं 'ब्रह्मजिज्ञासा कर्तव्येत्युक्त'मित्यानंदमयाधिकरणभाष्यवत्प्रयोजनप्रदर्शनमात्रपरम् । 'अंतः प्रविष्टं कर्तारं अंतः प्रविष्टः शास्ता जनाना'मित्यंतस्स्थे श्रुतस्य कर्तृत्वादेः पूर्वपक्षेऽन्यनिष्ठत्वेन जन्मादिसूत्राक्षेपस्य 'सर्वे वेदा यत्रैक भवंती'त्यतस्स्थे श्रुतस्य सर्ववेदप्रतिपाद्यत्वस्याप्यन्यनिष्ठत्वेन शास्त्रयोनिसमन्वयसूत्राक्षेपस्यापि संभवेन प्रयोजनस्यान्यथाप्युपपत्तेः ॥

यद्वा युक्तमानंदमयशब्दो विष्णुपर इति । तस्यार्थविशेषे निरूढत्वाभावात् । इन्द्रादिशब्दास्त्वर्थविशेषे निरूढा नान्यत्र नेतुं शक्याः । उक्तं हि—

'पदमज्ञातसं(बंधं)दिग्धं प्रसिद्धैरपृथक्श्रु(ति)तैः !
निर्णियते निरूढं तु न स्वार्थादपनीयत' इति ॥

(नि)रूढोऽप्यन्नशब्दोऽद्यतेऽत्ति चेति श्रुत्यक्तस्य योगस्यान्यत्रासंभवाद्ब्रह्मपरः । इंद्रादिशब्दानां त्विह श्रुतौ योगो नोक्तः । यौगिकार्थश्चैश्वर्यादिः

देवतासु संभवतीति पूर्वाधिकरणवैलक्षण्येन पूर्वपक्षोत्थानात्संगतिः । आकाशाद्यधिकरणेष्वाकाशादिशब्दानामन्यत्र रूढ्या पूर्वपक्षेऽपि तेषामेतदधिकरणानन्तर्ये हेतुर्वक्ष्यते ॥

यद्वा यदि ब्रह्मशब्दादानन्दमयो ब्रह्म तर्हीन्द्रादिशब्दादन्तस्थ इन्द्रादिः न तु ब्रह्म तच्छब्दाभावादिति पूर्वसिद्धान्तन्यायेन पूर्वपक्षिते पूर्वाधिकरणोक्तं श्रुत्यादिनिर्णयमपोद्य लिङ्गेन निर्णय उच्यत इति सङ्गतिः । इदं च सङ्गतिद्वयम्—

'आशङ्क्य तत्र रूढिं च तच्छब्दानामपि स्वयं'

मित्यनुव्याख्याने रूढिपदतच्छब्दपदप्रयोगात्सूचितम् ॥

यद्वा मान्त्रवर्णिकसूत्रे 'यो वेद निहितं गुहायां' इत्यानन्दमयस्यान्तस्थत्वमुक्तम् । तदिहाक्षिप्य समाधीयत इति सङ्गतिः । न च गुहानिहितत्वमन्यदन्तस्थत्वं चान्यदिति वाच्यम् । अन्तस्थवाक्यशेषे 'निहितं गुहा'स्विति श्रवणात् । इयं च सङ्गतिस्त्रयेन 'अदृश्येऽनात्म्ये' इति भाष्येण 'यो वेद निहितं गुहायामित्युक्त'मेति ज्योतिरधिकरणभाष्येण च समानन्यायतया सूचिता ॥

यद्यप्यन्तस्थत्वेनेन्द्रादिरेवान्तस्थत्वयुक्त आनन्दमयोऽपीन्द्रादिरेवेत्याक्षेप ऋजुः । अन्तस्थस्येन्द्रादित्वादन्तस्थस्यादृश्यत्वेन युक्त आनन्दमयोऽपीन्द्रादिरेवेत्याक्षेपस्तु वक्रः । यथा चान्तस्थत्वं वाक्यशेषपर्यालोचनया गुहानिहितत्वरूपमिति ज्ञेयमिति विस्रम्भः । तथा 'सहैव सन्तं न विजानन्ति देवा' इति देवाज्ञेयत्वात्तदन्यान्यैर्नादृश्यत्वं ज्ञेयमिति विस्रम्भः । तथाप्यदृश्यत्वयुक्ते नानाक्षेपेऽदृश्यत्वेन विष्णुलिङ्गेन विष्णुरेवान्तस्थ इति शङ्का स्यात् । सा मा भूत् । अदृश्यत्वस्यापीन्द्रादिधर्मत्वादिति दर्शयितुं वक्राक्षेपमुखात्सङ्गतिः कण्ठोक्ता । अन्या तु सूचिता ॥

अत्रान्तस्थः किमिन्द्रादिः किं वा विष्णुरिति चिन्ता । तदर्थं किमिन्द्रादिश्रुत्यनुसारेण समुद्रशायित्वादिलिङ्गं नेयमुत विपरीतमिति । तदर्थं किं श्रुतिर्निरवकाशा लिङ्गं तु सावकाशमुत विपरीतमिति । तथा लिङ्गस्य

निरवकाशत्वेऽपि किं श्रुतित्वप्रयुक्तप्राबल्यं बलवत्किं वा निरवकाशत्वप्रयुक्त प्राबल्यं बलवदिति ॥

**पूर्वपक्षस्तु—** अयमन्तस्स्थः इन्द्रादिरेव । इन्द्रादिश्रुतेरिति । नन्विन्द्रादिषु निर्धारित एक एवान्तस्स्थ इति वा पूर्वपक्षोऽनिर्धारितो यः कश्चिदिति वा सर्वोऽपीति वा । नाद्यः । अनेकप्रापकसद्भावेन निर्धारणायोगात् । वरुणादिलिङ्गानामिन्द्रादिश्रुतितो दौर्बल्यनिश्चयेऽपीन्द्रबृहस्पत्यादिश्रुतीनां साम्ये नैकस्यां दौर्बल्यानिश्चयात् । योगेन च बृहस्पत्यादिश्रुतेरिन्द्रे सावकाशत्ववत् बृहस्पत्यादावपीन्द्रश्रुतेः सावकाशत्वात् । न द्वितीयः । निर्धारणाभावे पूर्वपक्षस्य सन्देहादविशेषापातात् । समुद्रस्थत्वादिविष्णुलिंगानामपि सत्त्वेन विष्णोरन्य एवेत्यवधारणस्याप्यनुपपत्तेश्च । तेषां लिंगत्वादेव दौर्बल्यनिश्चये च सूर्यवरुणादिलिंगानामपि तन्निश्चयः स्यात् । न तृतीयः । 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे'त्यन्तःप्रविष्टे शास्तृत्वादेः श्रवणेनानेकेश्वरापातादिति चेत् । आद्यस्तावदस्तु । इन्द्र एवान्तस्स्थः । 'इन्द्रो राजा ब्रह्मेन्द्रमग्नि'मित्यादीन्द्रश्रुत्यभ्यासेन 'अपां नेतार'मित्यादिवरुणलिंगानां बृहस्पत्यादिश्रुतीनां च बाधादित्येकः पूर्वपक्षः ॥

सूर्य एवान्तस्स्थः । 'सप्त युंजन्ति रथमेकचक्र'मिति निरवकाशलिंगसहितया 'सवितारं बृहस्पति'मिति सवितृश्रुत्येन्द्रादिश्रुतीनां स्वे चित्तैश्वर्यादिमति सूर्ये संभवादित्यन्यः ॥

वरुण एवान्तस्स्थः । वरुणलिंगस्यान्ते श्रवणात्पूर्वदौर्बल्यन्यायेन तेनेतरबाधादित्यपर इति पक्षभेदेनावधारणात् ॥

अन्ये तु यथा सिद्धांतप्रापकसद्भावेऽपि तदज्ञानेन पूर्वपक्षस्तथा सूर्यादिप्रापकसद्भावेऽपि तदज्ञानेनेंद्राद्यैकैकावधारणेनानेके पूर्वपक्षा इत्याहुः ॥

द्वितीयो वाऽस्तु । अंतस्स्थो विष्णुरन्यो वेति संदेहे अन्य एवेत्येकावधारणेन प्रवृत्तस्य पूर्वपक्षस्य संदेहाद्विशेषसद्भावात् । सोऽन्य इंद्र एवेत्यादिनिर्धारणं तु नास्ति । इंद्रादिप्रापकाणां बलाबलानिश्चयात् । विष्णुलिंगानां त्विन्द्रादिश्रुतिभ्यो दौर्बल्यं निश्चितमिति तदन्यत्वेनावधारणं युक्तम् ।

विष्णुलिंगानां बहुत्वेऽपि बहुत्वप्रयुक्तप्राबल्यस्य स्वभावप्रयुक्तप्राबल्यात् दुर्बलत्वात् । न च तेषां निरवकाशत्वम् । समुद्रस्थत्वादेर्वरुणादावपि संभवात् ॥

यद्वा निरवकाशत्वेऽपि लिंगस्य प्रबलया श्रुत्या बाधोऽस्तु । न हि निरवकाशः शशशावको मृगेन्द्रेण न बाध्यते । न वा निरवकाशमिदं रूप्यमिति ज्ञानं नेदं रूप्यमित्यनेन न बाध्यते । सूर्यलिंगं तु सवितृश्रुत्यनुगृहीतमिति न तस्यापि दौर्बल्यनिश्चयापत्तिः । 'ब्रह्मेन्द्रमग्नि'मिति ब्रह्मशब्दस्तु 'ब्रह्मान्वविद'दित्यादाविव 'तपमान्दविद'दित्युत्तरवाक्यस्थक्रियापेक्षितकर्तृसम-र्पकत्वेन प्रथमान्तत्वया पुंलिंगत्वाच्च चतुर्मुखपरो न तु परब्रह्मपरः । 'अपां नेतार'मिति वरुणलिंगस्य दौर्बल्यनिश्चयेऽग्नीन्द्रसवितृबृहस्पत्यादिषु श्रुतत्वाविशेषाद-नवधारणं युक्तम् । टीकायां पूर्वपक्षे वरुणलिंगं त्वि त्युक्तिस्तु सतीष्वपीन्द्रादिलिंग-श्रुतिषु यदि विष्णुलिङ्गात्तत्स्थो विष्णुस्तर्हि वरुणलिंगाद्वरुणोऽपि स्यादिति सिद्धान्तेनं प्रत्यनिष्टं दर्शयितुम् । यद्वा वरुणलिंगस्यान्ते श्रवणात्पूर्वदौर्बल्य-न्यायेन न तस्यापि दौर्बल्यनिश्चयः ॥

तृतीयो वाऽस्तु । विष्णुलिंगानां निरवकाशत्वेनाबाध्यत्वादिन्द्रादिश्रु-तित्वादेव लिंगाबाध्यत्वादुभयानुग्रहार्थं विष्णुरेव तत्तदुपाधिवशादिन्द्रादिसंज्ञां लभत इति वदता पूर्वपक्षिणेन्द्रादीनां विष्ण्वैक्याङ्गीकारेणानेकेश्वरापत्त्य-भावात् । तथा च श्रुतिः 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षर'इत्यादिका । स्मृतिश्च —

'अहं भवो भवन्तश्च सर्वं नारायणात्मकं'

मित्यादिका । न चैवं विष्णोरेवान्तस्थत्वापत्तिः । कल्पितभेदस्योपहितस्य प्रसिद्धस्येन्द्रादेरेवान्तस्थत्वात् । विष्णुलिङ्गानां चानुपहितरूपाभिप्रायेणोपपत्तेः । एतच्च पूर्वपक्षत्रयं सुधायामत्र च पूर्वपक्षे इन्द्रादीनां विष्ण्वभेदस्याप्युक्तत्वात् अत्र च टीकायां 'इन्द्रादिः स्या'दित्युक्त्वा इन्द्राद्यन्यतम' इत्यप्युक्तत्वात् आनन्दमयाधिकरणे च हिरण्यगर्भरुद्राद्यनेकप्रापकयुक्ते 'पूर्वपक्षा-नाह' तिबहुवचनप्रयोगाच्च टीकाभिप्रेतम् । भाष्ये च पक्षत्रयसाधारण्येन

'अन्यः प्रतीयते' इत्युक्तम् । एवमन्यत्राप्यनेकप्रापकयुक्तपूर्वपक्षो यथासंभव मूह्यः । एवंचेन्द्रबृहस्पत्यादीनामेवानन्दमयत्वात्तेषामानन्दमयाद्भेदव्यपदेशोऽप्ययुक्त इति ॥

सिद्धान्तस्तु—

लिङ्गादिभ्यो बलवती श्रुतिर्यद्यपि च स्वतः ।
अवकाशोज्झितैर्लिंगैस्सावाकाशा तु बाध्यते ॥ १ ॥

यद्यपि 'ऐन्द्या गार्हपत्यमुपतिष्ठत' इत्यादौ श्रुत्या लिङ्गबाधेन श्रुतेरुत्सर्गतो बलवत्त्वम् । तथापि यथा 'श्येनेनाभिचरन्यजेते'त्यादौ श्येनशब्दोऽन्यत्र रूढोऽपि 'यथा वै श्येनो निपत्यादत्त' इतिवाक्यशेषोक्तस्य श्येनसादृश्यस्य श्येनेऽनुपपत्त्या यागपरः तथा समुद्रान्तस्स्थत्वादीनामन्यत्रासंभवादिन्द्रादिशब्दा विष्णुपरा एव ॥

लोके श्रुतौ स्मृतौ चैव विष्णुलिङ्गतया स्थितम् ।
समुद्रान्तरवस्थानपूर्वकं कथमन्यगम् ॥ १ ॥

श्रुत्यादिकं च भाष्य उदाहृतम् । एवं च 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल'मिति न्यायेन निरवकाशलिंगेन वैदिकतया सर्वथा बाधायोग्येन सावकाशश्रुतिबाधः । तदेतदभिप्रेत्योक्तं न्यायविवरणे 'श्रुतिसंदेहेऽनन्यथासिद्धलिंगेन निर्णयोपपत्ते'रिति ॥

किंच 'इन्द्रं मित्रं वरुणमग्निमाहु'रित्यादिश्रुत्येन्द्रादिशब्दानां विष्णावेव विद्वद्रूढेः सत्त्वेन इन्द्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यादेर्विष्णावेवानन्याधीनत्वनिरवधिकत्वाभ्यां मुख्यतः संभवेन महायोगस्यापि सत्त्वेन चेन्द्रादिश्रुतिर्विष्णावेव मुख्या । न चेन्द्रं मित्रमित्यादिवाक्यमिन्द्राद्यभेदपरम् । आहुरिति तत्तच्छब्दवाच्यत्वस्यैवोक्तेः । 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशाविधर्मणी'ति वाक्यशेषे भेदोक्तेश्च । 'यो देवानां नामधा' इति श्रुत्यन्तरसंवादाच्च । 'सोऽनकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरि' रिति श्रुत्यन्तरेऽभेदविवक्षायां स रुद्र इत्यनेन स ईश इत्यस्य पौनरुक्त्यापत्त्या तत्तच्छब्दवाच्यताया एव विवक्षणीयत्वाच्च । 'स प्रथमः संकृतिर्विश्वकर्मा

स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पति'रिति श्रुत्यन्तरे प्रथम पदेन भेदेन प्रतीतेश्च । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यमु सत्यमाहु'रिति श्रुत्यन्तरे 'यो देवानां देवतमस्तस्मै त्वा तेभ्यस्त्वे'ति भेदोक्तेश्च । 'भीषास्माद्वातः पवते'इति 'भयादस्याग्निस्तपती'ति च श्रुत्यन्तरे भेदोक्तेश्च ॥

'न तु नारायणादीनां नाम्नामन्यत्र संभवः ।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित' इति स्मृतेश्च ॥

यदि च श्रुतिलिंगयोरनुग्रहायाभेदस्तर्हि 'आकाशादेव समुत्पद्यन्त' इत्याकाशश्रुतेः कारणत्वादिरूपलिंगस्य चानुग्रहायाकाशब्रह्मणोः तथा 'कदा चन स्तरीरसि नेन्द्र'तिमन्त्रस्यस्येन्द्रप्रकाशनसामर्थ्यरूपलिंगस्य 'ऐन्द्र्या गार्ह पत्यमुपतिष्ठत' इति द्वितीयाश्रुतेश्चाविरोधायेन्द्रगार्हपत्ययोः तथा व्रीहियव शास्त्रयोः षोडशिग्रहणाग्रहणशास्त्रयोश्चाविरोधाय व्रीहियवयोर्ग्रहणाग्रहणयोश्च विरुद्धांशत्यागेनैक्यं च स्यादिति बहुविप्लवापत्तिः ॥

स ब्रह्मेत्यादिश्रुतिरपि तत्तच्छब्दप्रवृत्तिनिमित्तोक्तिमुखेन तत्तच्छब्द समन्वयपरा । न तु प्रसिद्धदेवाभेदपरा । अन्यथा 'सोऽक्षर' इत्युक्ते ब्रह्म प्रसिद्धाकाराद्यक्षरात्मकं स्यात् । 'अहं भव' इत्यादिस्मृतिरपि —

'पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीयत्वान्न तु सर्वस्वरूपत' ॥

इत्यादिस्मृतिवशात्तदीयत्वपरा वा, —

'यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु ममामनु ।
ऐकात्म्यमागतं विद्धि पाण्डवैर्धर्मसंश्रयैः' ॥

रित्यादिवदत्यन्तप्रियत्वाभिप्राया वा द्रष्टव्या । इन्द्रादीनां ब्रह्मणोऽन्यत्वं स्वीकृत्य वाक्यस्येन्द्रादिपरत्वाङ्गीकारे त्वैकत्वाभावाद्वाक्यभेदः स्यात् । एवं च —

अग्नींद्रादिश्रुतिर्नानामार्गा लिंगैर्हि वैष्णवैः ।
नीतैककण्ठ्य नो चेत्तत्कलहं को निवारयेत् ॥ १ ॥

इन्द्रमयादिशब्दानां ब्रह्मणि परममुख्यत्वेऽपि यत्र बाधकं तत्र तद्देवता

परत्वं युक्तमेव। पादान्त्यप्राणाधिकरणन्यायेन च सूर्यवरुणादिलिङ्गमपि तत्तदन्तर्गतभगवत्येव मुख्यमिति त्रिविधपूर्वपक्षोऽप्ययुक्तः। तत्राद्यद्वितीयौ प्रथमसूत्रेण निरस्तौ। तृतीयस्तु द्वितीयेनेति द्रष्टव्यम्॥

न च 'इन्द्रस्यात्मे'त्यादावात्मशब्दः स्वरूपपरः। तथाच सूत्रोक्तो भेदव्यपदेशोऽसिद्ध इति शङ्क्यम्। 'सहैव सन्तं न विजानन्ति देवा' इति साहित्यकर्मकर्तृभावादिना भेदव्यपदेशात्। षष्ठ्या औपचारिकत्वापाताच्च। इन्द्रादिशब्दवाच्य उपहिते परमात्माभेदस्य परेणाप्यनङ्गीकृतत्वेनेन्द्रादिप्राति पदिके लक्षणापाताच्च। अत्रैव प्रकरणे 'आत्मा जनाना'मित्यन्तर्यामिण्या-त्मशब्दप्रयोगाच्च॥

न च तत्राप्यात्मशब्दः स्वरूपपरः। अस्मिन्नेव प्रकरणे 'शास्ता जनाना'मित्यस्यायोगात्। अत्रैव प्रकरणे 'सर्वात्मे'ति चात्यन्तायुक्तं स्यात्। ज्ञानादिरूपस्य ब्रह्मणस्तद्विरुद्धजडरूपतायाः केनाप्यनङ्गीकृतत्वात्। तस्मात् 'इन्द्रस्यात्मे'त्यादावात्मशब्दो न स्वरूपवाची। किंतु शरीरप्रतिसबन्धिवाची। तत्र तस्य प्रयोगबाहुल्यात्। तथा च 'इन्द्रस्यात्मे'त्यादिश्रुतिरिन्द्रादेरीश्वर शरीरस्थानीयत्वाभिप्राया। 'इन्द्रो राजे'त्यादाविन्द्रशब्दस्य ब्रह्मपरत्वेऽपि 'इन्द्रस्यात्मे'त्यादावन्यपरता च बाधकबलाद्युक्ता॥

**अन्ये तु** 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इत्यक्ष्यादित्ययोरन्तस्स्थः प्रतीयते। स विद्याकर्मातिशयलब्धै श्वर्यः कश्चित्संसारी न तु परमात्मा। 'हिरण्यश्मश्रु'रित्यादौ रूपादिश्रवणात्। परमात्मनश्चारूपत्वेन श्रुतत्वादिति प्राप्ते परमात्मैवेति सिद्धान्तः। आदित्यवाक्ये 'सर्वेभ्यः पाप्मभ्य उदित' इति श्रुतस्य सर्वपापराहित्यस्याक्षिवाक्ये 'सैवकर्त-स्सामे'त्यादौ श्रुतस्य सार्वात्म्यस्य च संसारिण्यसंभवात्। रूपादिकं तु नीरूपेऽपि सविशेषब्रह्मणि साधकानुग्रहार्थमैच्छिकमुपास्यं मायामयमस्ति॥

यद्वा सर्वस्य कार्यजातस्य ब्रह्मोपादानकत्वादुपादेयस्य चोपादानादनन्य त्वात्कार्यशरीरगतरूपादिभिर्ब्रह्म व्यपदिश्यते। मुमुक्षुं प्रति सविशेषनिरूपणं च मोक्षसाधननिर्विशेषब्रह्मज्ञानार्थम्। यथोक्तम्—

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकंप्यंते सविशेषनिरूपणे' ॥

रित्यादीत्याहुः ॥

केचित्तु इदमेव वाक्यमुदाहृत्यैवमेव च पूर्वपक्षयित्वा 'तस्य यथा कप्यासं पुण्डरीक'मेति श्रुतं पुण्डरीकाक्षत्वं सिद्धान्तयुक्तिमाहुः । तदुभयमपि न । अस्मद्रीत्याऽऽनन्दमयाधिकरणाक्षेपायाऽऽदृश्यत्वादिगुणयुक्तस्य स्वप्रकरणस्थेनेश्वरेणैकवाक्यस्योदाहरणत्वसंभवे तद्रहितस्य तदयोगात् । उक्तं हि त्वयैव 'य आदित्यमन्तरो यमयतीति श्रुत्यन्तरे भेदव्यपदेशा' दिति । किंच —

नीरूपेऽपि च रूपादि ह्युपास्त्यर्थमुच्यते ।
जीवेऽपि पाप्माभावादि ह्युपास्त्यर्थमुच्यताम् ॥ १ ॥

ननु जीवे पाप्मनो व्यावहारिकत्वात्तद्राहित्यं प्रातिभासिकम् । ब्रह्मणि तु नीरूपत्वस्य तात्त्विकत्वाद्रूपं व्यावहारिकम् । न च व्यावहारिकविषयत्वेन प्रामाण्यसंभवे श्रुतेः प्रातिभासिकविषयत्वं युक्तमिति चेन्न । त्वन्मत उपास्यस्य नामादौ ब्रह्मत्वादेः प्रातिभासिकत्वनियमेनात्रापि तथैव युक्तत्वात् । त्वन्मत चोपासनावाक्यस्य तत्कर्तव्यतामात्रपरत्वेनार्थपरत्वाभावात् । कर्तव्यताया च व्यावहारिकप्रातिभासिकविभागाभावात् । श्रुतौ श्रद्धालुना श्रुत्योर्विषयभेदेन तात्त्विकविषयत्वस्यैव वक्तव्यत्वाच्च । न च हिरण्यश्मश्रुत्वादिकमन्यतः प्राप्तम् । येनतद्वाक्यमनुवादकं सत्तत्रातात्पर्यादप्रमाणं न स्यात् ॥

किंच जीवे पाप्मादेर्व्यावहारिकत्वेऽपि तद्राहित्यश्रुतिस्त्वंपदलक्ष्यशुद्धरूपाभिप्राया पारमार्थिकविषयैवास्तु । न च शुद्धं रूपं ब्रह्मैवेति ब्रह्मविषयत्वापत्तिः । त्वयाऽस्य वाक्यस्य सविशेषाशुद्धब्रह्मविषयत्वाङ्गीकारात् ॥

यच्चोपादानं ब्रह्म कार्यकारणयोरभेदात्कार्यगतधर्मैर्व्यपदिश्यत इत्युक्तं तन्न । स्वर्णे कटकत्वादेरिव कटकादावपि स्वर्णत्वस्य व्यवहारेण ब्रह्मधर्मैः कार्य एव व्यपदेशापातात् । न चैतदधिकरणप्रतिपाद्यं सविशेषं ब्रह्म शरीरादिभ्रमाधिष्ठानम् । येनाधिष्ठान एवारोप्यधर्मव्यवहारो न तु विपरीतमिति

शंक्येत । कथं चाधिष्ठाने ब्रह्मणि पापराहित्याद्यसाधारणरूपेण भासमाने तत्रा ध्यस्तगतधर्मव्यवहारः । किंचैवं ब्रह्मणो विरुद्धधर्माधिकरणनानाकार्योपादान तया ब्रह्मविषयकवाक्यविरोधः काप्यपरिहार्यः स्यात् ॥

यच्चोक्तं सविशेषनिरूपणं मोक्षसाधननिर्विशेषज्ञानार्थमिति तन्न । 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'ति श्रुतसर्वपापनिवृत्तिरूपमुक्तिफल ज्ञानस्याश्रुतफलान्तरकल्पनस्य चायोगात् ॥

किंच किं सविशेषज्ञानं निर्विशेषज्ञानार्थं किं वा तस्य ज्ञानविजातीय वृत्त्यन्तररूपमारोपितविषयमुपासनापरपर्यायं ध्यानम् । नाद्य । निर्विशेष शब्देन विशेषाभावविशिष्टस्योक्तौ त्वन्मते विशिष्टज्ञानस्य मोक्षाहेतुत्वात् । तद भावेनोपलक्षितस्योक्तौ च काकेन गृहे सस्थानविशेषस्येव विशेषाभावेन विशेषस्यै वोपलक्ष्यत्वे तस्य विशिष्टग्राहिणा ज्ञानेन प्रागेव ज्ञातत्वात्, अन्यस्य चोपल क्ष्यस्याभावात् उपलक्ष्यत्वाकारेण च ज्ञानस्य त्वन्मते मोक्षासाधनत्वात् । न च विशेषणाविषयं विशेष्यज्ञानं प्रागसिद्धमिति वाच्यम् । विशिष्टज्ञानस्य विशेषणज्ञानाभावार्थत्वायोगात् । तथा च —

विशिष्टब्रह्मधीसाध्या शुद्धधीरित्यसङ्गतम् ।
विशिष्टप्रत्यये यस्माद्विशेष्यं भासतेतराम ॥ १ ॥

किंच सविशेषज्ञानं निर्विशेषज्ञानस्य न तावद्दृष्टद्वारा हेतुः । तद्वि शिष्टज्ञानजन्येनाज्ञानध्वंसेन चित्तवशीकरणेन वा तदभावविशिष्टज्ञानस्य वा तदभावोपलक्षितज्ञानस्य वा तद्विशेषणाज्ञानस्य वा काप्यदर्शनात् । रूपादि युक्तप्रागभूतसविशेषज्ञानेन तद्विपरीतनिर्विशेषज्ञानायोगाच्च । निषेधोपयोगिनो बुद्धिपूर्वकारोपस्यापि शब्दप्रमाणानपेक्षत्वात् । न ह्यत्र घटोऽस्तीत्युक्त्वाऽत्र स नास्तीति वक्तव्यम् । नाप्यदृष्टद्वारा । विहितक्रियाजन्यत्वाददृष्टस्य । त्वन्मते च ज्ञानस्याविधेयत्वात् । नापि ज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारा । तस्य नित्यादिकर्मणैव निवृत्तेः । नित्यादिकर्मणामपीहैव शास्त्रे निरूपणापत्तेश्च । त्वन्मते ज्ञानस्याज्ञानमात्रनिवर्तकत्वाच्च । न च व्यावहारिकं दुरितं व्याव हारिकसविशेषब्रह्माज्ञानकार्यम्, येनाज्ञाननिवृत्त्या तत्कार्यं पापं निवर्तेत ॥

एतेन सविशेषज्ञानसंतानरूपं निदिध्यासनमदृष्टद्वारा वा दुरितनिवृत्तिद्वारा वा चित्तवशीकरणद्वारा वा निर्विशेषज्ञानार्थमिति निरस्तम् । श्रुतहान्याद्यापातात् । सविशेषनिदिध्यासनस्यापि निर्विशेषनिदिध्यासनवत्स्वविषयापरोक्षहेतुताया एव युक्तत्वाच्च । दशमस्त्वमसीत्यादाविव शाब्दे ज्ञाने चित्तवशीकरणानपेक्षणाच्च । आपरोक्ष्यहेतुचित्तैकाग्र्यादेश्च निर्विशेषपरोक्षज्ञानाधीनतन्निदिध्यासनादेव सिद्धेः । चित्तवशीकरणाभावे सविशेषनिदिध्यासनस्यैवायोगाच्च । नापि सविशेषध्यानं निर्विशेषज्ञानार्थमिति द्वितीयः । ज्ञान विशेषो ध्यानमित्यन्यत्रोक्तत्वात् । इह 'य एवं वेदे'ति ज्ञानार्थविदधातुश्रवणाच्च । भगवति रूपं तात्त्विकमित्यन्यत्रोक्तत्वाच्च । 'हिरण्मयः पुरुषो दृश्यत' इत्यपरोक्षज्ञानविषयत्वोक्तेश्च । न हि योषित्यग्नित्वं दृश्यत इत्युच्यते । किंच योषिदादेरग्नित्वाद्यभावेऽपि तथा ध्यानवन्निर्विशेषब्रह्मण एव हिरण्यश्मश्रुत्वादिना ध्यानमभवेन सविशेषब्रह्मणः साधकानुग्रहार्थमैच्छिकरूपपरिग्रहोक्तिरयुक्ता । तस्मान्न सविशेषनिरूपणं निर्विशेषज्ञानार्थम् ॥

अन्यथा वैपरीत्यं स्यात् । 'सत्यं ज्ञान'मित्यादिसद्ब्रह्मनिरूपणमपि 'असद्वा इदमग्र आसी'दित्यादिश्रुतिसिद्धासद्ब्रह्मज्ञानार्थं स्यात् । एवं च—

असद्रूपं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मंदास्तेऽनुकंप्यंते सद्ब्रह्मप्रतिपादनैः ॥ १ ॥
निर्विशेषं परं धर्ममनुष्ठातुमनीश्वराः ।
ये मंदास्तेऽनुकंप्यंते सविशेषनिरूपणैः ॥ २ ॥

इति स्यात् । शक्यं हि ब्रह्मकाण्डे लक्षणया निर्विशेषब्रह्मेव कर्मकाडेऽप्यग्निहोत्रादिसविशेषधर्मविलक्षणः कश्चिन्निर्विशेषो धर्मः प्रतिपाद्यत इति वक्तुम् । किंच—

आद्यसूत्रे धर्मशब्दाद्द्वितीये भेदशब्दतः ।
निर्धर्मकत्वमैक्यं च निरस्तं परवस्तुनः ॥ १ ॥
धर्मो भेदश्च मिथ्या चेत् श्रुतिसूत्राप्रमाणता ।
व्याख्याव्याजेन चोक्ता स्यात्त्वया सौगतसौहृदात् ॥२ ॥

परमतेऽस्याधिकरणस्य 'अतर उपपत्ते'रित्यनेन पौनरुक्त्यं स्वमते तदभावश्च तत्रैव वक्ष्यते ॥

**टीकाक्षरार्थस्तु— प्राबल्याद्यविवेकेनेति** ॥ श्रुतिलिङ्गाधिकरण-सिद्धात्प्रागिव श्रुतिः प्रबला लिंगं तु दुर्बलमित्यविवेकेनेत्यर्थः । यद्वा श्रुतेः स्वतो बलवत्त्वाल्लिङ्गस्य च निरवकाशत्वेन बलवत्त्वादिदं प्रबलमिदं दुर्बलमित्य-विवेकेनेत्यर्थः । **संगतत्वाद्ग्रहणमिति** ॥ अल्पाक्षरे सूत्र एकलिंगसमन्वयोक्त्याऽनेकनामसमन्वयस्यार्थिकसिद्धेरेव संगतत्वात् । अनेकसमन्वयोक्त्या त्वेकस्य समन्वयस्यार्थिकसिद्धेरसङ्गतत्वात । एकनामसमन्वयोक्त्या चोदाहरणवाक्यस्थसजातीयनामसमन्वयाक्षेपस्य विजातीयलिंगसमन्वयाक्षेपस्य च सति गत्यन्तरे गौरवापादकतया क्लिष्टत्वेनासंगतत्वात् । सजातीयस्योपलक्षणं विजातीयस्याक्षेप इत्यस्यापि वैरूप्येणासभावितत्वादित्यर्थः ॥

यद्वा यत्रैकं साक्षादन्यदर्थादिति नामलिंगात्मकमुभयं तत्रान्यत्र निरूढनामसमन्वयस्य प्रथमं बुद्धावनारोहान्न तन्मुखेन लिंगसमन्वयः सगतः। अनिरूढलिंगमुखेन तु नामसमन्वयः संगतः । अत एव पूर्वमानन्दमयलिंगसमन्वयमुखेनानन्दादिनामसमन्व[य उक्तः]यो युक्तः । यस्तु द्वितीयपादे वैश्वानराधिकरणे नामसमन्वयमुखेन लिंगसमन्वयः स प्रथमपादेऽन्यत्र निरूढनामसमन्वयस्योक्तत्वेन बुद्धावारोहात्पाचकत्वादिलिंगानामप्यन्यत्र निरूढत्वाद्बहुत्वाच्च युक्त इत्यर्थः । यद्वा अन्तस्स्थनिष्ठतया श्रुतेन समुद्रस्थत्वादिनान्तस्स्थस्यैव विष्णुत्वसाधने सामानाधिकरण्येन संगतिः । इन्द्रादेस्तु तत्साधने वैयधिकरण्येनासगतिः स्यादित्यर्थः ॥

यद्वा अन्तस्स्थस्याविष्णुतयाऽऽनन्दमयस्यापि विष्णुत्वाक्षेपो युक्तः । तद्धर्मस्यादृश्यत्वस्यान्तस्स्थे साक्षाच्छ्रवणात् । न रुद्रादेरविष्णुत्वेन । तत्रादृश्यत्वाश्रवणात् । ततश्च पूर्वाधिकरणसंगत्यर्थं लिंगग्रहणमित्यर्थः ॥

॥ इति अन्तस्स्थत्वाधिकरणम् ॥

[ आकाशाधिकरणम् ]

**8 – ॐ आकाशस्तल्लिङ्गात् ॐ ॥ १-१-८ ॥**

अत्राधिभूतगताकाशादिनाम्नां समन्वय उच्यते। भूतेष्वाकाशस्य प्राधान्यात्सूत्रे तस्य मुखतः कीर्तनम्। अन्येषां तूपलक्षणम्। अत एव सङ्गतिटीकायां 'आकाशनाम्न' इत्युक्त्वाधिकरणोपसंहारटीकायां 'आधिभौतिक सर्वशब्दोपलक्षके'त्युक्तम् ॥

यद्यपि भूतेतरवाचिनामप्येतन्न्यायविषयाणामनेन समन्वयः सिद्ध्यति तथापि सजातीये भूतशब्दे प्रथमं बुद्ध्यवतारादाधिदैविकेन्द्रादिशब्देष्वाध्यात्मिकप्राणादिशब्देषु च स्वभावप्रवृत्तिनिमित्तकत्वाभावेनेतरत्रैतन्न्यायाप्रवृत्तेश्च टीकायामाधिभौतिकोपलक्षकतोक्तिः। न चात्रापि पूर्वत्रेवाकाशनामसमन्वयार्थमनन्तत्वादिलिङ्गसमन्वय एवोच्यतामिति शंक्यम्। पूर्वत्रान्तस्स्थत्व-रूपैकलिङ्गसमन्वयेन बहुनामसमन्वयात्। अत्र त्वाकाश इत्येकनामसमन्वयेन बहुलिङ्गसमन्वयसिद्धेः। अनन्तत्वादेः सिद्धान्तहेतुत्वेन तत्र सशयानुदयाच्च। अनन्तरसङ्गतिस्त्वधिकाशङ्कां कृत्वा पूर्वन्याय एवातिदिश्यत इत्यातिदेशिकी ॥

यद्यपि 'अत एव प्राण' इत्याद्यधिकरणत्रयेऽप्यनन्तराधिकरणन्यायातिदेशः तथाप्यधिकाशङ्काक्रमाच्चक्रमः। शङ्काक्रमश्च तत्र तत्र वक्ष्यते। यद्वा 'आकाशाद्वायुः वायोरग्नि'रिति श्रुत्याऽऽकाशादेर्वाय्वादिकारणत्वोक्तेस्तदनुसारेणाकाशप्राणज्योतिरधिकरणानां क्रमः। 'को ह्येवान्या'दिते भाष्ये तु 'आकाश इति होवाचे'त्यत्राकाशस्य विष्णुत्वाभावे 'यदेष आकाश' इत्यत्राप्यन्यः स्यादित्यानन्दमयोऽप्यन्यः प्रसज्येतेति पूर्वपक्षे आनन्दमयाधिकरणाक्षेपात् सिद्धान्ते च तत्समाधानात्सफलोऽयं विचार इत्युक्तम् ॥

न च यथा सिद्धान्ते 'आकाश इति होवाचे'त्यत्राकाशशब्दस्य ब्रह्मपरत्वेऽपि 'आकाशः संभूत' इत्यत्र भूतपरत्वं तथा सिद्धान्ते 'यदेष आकाश'

इत्यत्रापि भूतपरत्वमस्तु । यदि तु 'यदेष' इत्यत्र ब्रह्मलिङ्गाद्ब्रह्मपरता तर्हि यथा सिद्धान्ते संभूतवाक्य आकाशशब्दस्य भूतलिङ्गाद्भूतपरत्वेऽपि यदेष इति वाक्ये ब्रह्मलिङ्गाद्ब्रह्मपरता तथा पूर्वपक्षे इति होवाचेतिवाक्ये भूतपरत्वेपि यदेष इत्यत्र ब्रह्मलिङ्गाद्ब्रह्मपरता भविष्यतीति नानन्दमयाधिकरणाक्षेप इति शंक्यम् । सिद्धान्ते संभूतवाक्ये संभूतत्ववद्यदेष इति वाक्ये कस्यचिद्भूतलिङ्गस्याभावात् । भूते प्रसिद्धिमात्रस्य चैतत्सिद्धान्तेन निरासात् । 'इति होवाचे'ति वाक्ये च पूर्वपक्षे प्रबलभूतलिंगाभावात् । ब्रह्मलिङ्गानामेव च भावात् । भूते प्रसिद्धिमात्रेण बहुलिंगानामन्यथाकरणस्य 'यदेष' इतिवाक्येऽपि साम्यात् । तस्माद्युक्तं प्रयोजनम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥

ननु यद्येवमानन्दमयाधिकरणाक्षेपस्तर्हि साक्षात्तदाक्षेपार्थमानन्दमयशब्दे मयटो विकारार्थत्वमिव यदेष इति वाक्ये आकाशशब्दस्य भूताकाशपरत्वम शंकयानन्दमयस्य विष्णुत्वसिद्धये ब्रह्मणि समन्वय उच्यताम् । अन्तस्स्थत्वस्य त्वानन्दमयप्रकरणे श्रवणेऽपि तस्य स्वतोऽन्यत्र प्रसिद्ध्यभावादन्यत्र प्रसिद्धेन्द्रादि श्रुतिसाहचर्यस्य तत्प्रकरणेऽभावेन तत्र पूर्वपक्षानुदयाद्वाक्यान्तरोदाहरणं युक्तम् । आकाशशब्दस्त्वानन्दमयप्रकरणे श्रुतः स्वतोऽन्यत्र प्रसिद्धश्चेति तत्रैव पूर्वपक्षोदय इति वैषम्यम ॥

सत्यम् । तथापि मयट इवाकाशशब्दस्य समन्वेतव्यानन्दमयशब्दान्तर्भावाभावेन न्यायभेदेन चाधिकरणभेदे सिद्धे 'आकाश इति होवाचे'ति वाक्यान्तरस्यापि समन्वये एतत्प्रकरणस्थबहुगुणाभावात् तथैतत्समन्वयेन निर्णित ब्रह्मप्रकरणस्थयदेषवाक्यसमन्वयवद्यदेष इति वाक्यसमन्वयेनानिर्णीतब्रह्मप्रकरण स्थैतद्वाक्यसमन्वयासिद्धेः तथा सिद्धान्तिना सावकाशयितव्यना भूतलयाधिष्ठा नत्वादिपूर्वपक्षयुक्तीनां निरवकाशयितव्याना परोवरीयस्त्वादिसिद्धान्तयुक्तीनां च यदेष इत्यत्राभावाच्च वाक्यान्तरोदाहरणं युक्तम् ॥

अत्र यद्यपि 'आकाश इति होवाचे'त्यत्राकाशस्यान्यत्वे 'आकाशा देव समुत्पद्यंत इति तत्प्रकरणे श्रुतं कारणत्वमप्यन्यस्यैव स्यादिति जन्मादिसूत्र मप्याक्षेप्तुं शक्यं भाति तथापि समुत्पद्यंत इत्यस्योपादानत्वेऽप्युपपत्तेर्जन्मादिसूत्रोक्त

कर्तृत्वाक्षेपायोगादानन्दमयाधिकरणानाक्षेपे तदाक्षेपकान्तरधिकरणप्राणाधिकरणयो र्मध्येऽस्य निवेशायोगाच्चानन्दमयाधिकरणमेवाक्षिप्तम् ॥

केचित्तु अचेतनस्यैव पूर्वपक्षिणाऽऽकाशत्वेन शंक्यमानत्वाज्जन्मादि सूत्रोक्तकर्तृत्वानाक्षेप इत्याहुः । तन्न । अचेतनस्याप्यभिमानिद्वाराऽनन्दमयत्ववत्कर्तृत्वस्याप्युपपत्तेः ॥

अन्ये तु सन्निकृष्टानन्दमयाक्षेपसंभवे विप्रकृष्टजन्मादिसूत्राक्षेपो न युक्त इत्याहुः । तन्न । टीकायामानन्दमयाक्षेपस्य व्यवहितजिज्ञासाक्षेपपर्यन्तत्वोक्तेः ॥

अत्राकाशः किं भूताकाशः किं वा ब्रह्मेति चिन्ता । तदर्थं किमाकाशश्रुतिप्रसिद्ध्यनुसारेण परोवरीयस्त्वादिलिंगं बाध्यं किं वा विपरीतमिति । तदर्थं प्रसिद्धिबाधे श्रुतेः किं मुख्यत्वहानिरुत नेति । तदर्थमाकाशशब्दप्रवृत्तिनिमित्तं ब्रह्मणि किं नास्त्युतास्तीति । तदर्थं जडस्वभावः किमीश्वरानधीन उत तदधीन इति । यद्यधीनस्तदा तदधीनत्वन्यायेन ब्रह्मणि मुख्यत्वमन्यथा तु न ॥

यद्यपि निरवकाशलिंगैर्लोकप्रसिद्धिबाध इह पूर्वत्र चाविशिष्टः विषयवाक्यभेदमात्रेण च नाधिकरणभेदः, तथाप्यधिकाशङ्कानिरासादपौनरुक्त्यम् । शङ्का च—

'चेष्टा हि चेतनानां या सा भवेत्तत्प्रसादतः ।
अचेतनस्वभावस्तु विवरादिः कथं ततः'

इत्यनुव्याख्याने दर्शिता । तत्राकाशशब्दप्रवृत्तिनिमित्तस्य विवरत्वादेर्भगवदधीनत्वेऽचेतनगतत्वं स्वभावत्वं चेति हेतुद्वयं विवक्षितम् ॥

तत्राद्ये भृत्यगतस्य जयस्य राजाधीनत्वेन राजा जयीति प्रयोगस्येवाचेतनगतप्रवृत्तिनिमित्तस्य चेतनाधीनत्वे चेतने जडवाचिशब्दप्रयोगादर्शनात्तत्प्रसादलब्धस्वरूपं तदधीनत्वं शब्दप्रवृत्तिनिमित्तम् । न तु यथेष्टविनियोगार्हत्वरूपम् । न चाचेतने भगवतः प्रसादोऽस्तीति शङ्काभिप्रायः । अत एवानुव्याख्याने 'तत्प्रसादत' इत्युक्तम् । एवं चाचेतनगतप्रवृत्तिनिमित्तकाः सर्वेऽपि शब्दा इह तेन रूपेण विचार्याः ॥

द्वितीये तु इन्द्रादिशब्दप्रवृत्तिनिमित्तानामैश्वर्यादीनामिव विवरत्वादीना स्वभावत्वाऽन्नेशाधीनता । अन्याधीनत्वे स्वभावत्वहानेः । भृत्यादिगत स्वाभाविकाभिरूप्यादिना राज्यभिरूपादिशब्दाप्रयोगाच्चेति शङ्काभिप्रायः । अत्रापि स्वाभाविकप्रवृत्तिनिमित्तकाशशब्दास्सर्वेऽपीह तेन रूपेण विचार्याः । कस्यचिदुदाहर्तव्यत्वादानन्दमयाक्षेपकत्वाच्चाकाशशब्द उदाहृतः । वाजपेयाधिकरणे उद्भिदादिशब्दानामपि विचार्यत्वेऽपि वाजपेय शब्द इव ।।

यद्वा विवरत्वादिकं किमिन्द्रादिगतैश्वर्यादिवदीश्वरप्रसादलब्धत्वात्तदधीनं किं वा कुलालाद्यधीनचक्रादिभ्रमणवदागंतुकत्वमात्रेण । नाद्यः । तस्याचेतनगतत्वेन तदभावात । नान्यः । स्वभावत्वात् । तथा च विवरत्वादिकं नेश्वराधीनमितीश्वरानधीनत्वे सापेक्षयोरेवाचेतनगतत्वस्वभावत्वयोर्हेतुत्वम् । यद्वा—

'स्वातंत्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारण'

मित्युक्तत्वाद्द्वयं निमित्तम् । तत्र न तावन्निरवधिकैश्वर्यादिवन्निरवधिकं विवरत्वादिकं ब्रह्मगतम् । तस्याचेतनगतत्वात् । नापि पुरंदरादिगतैश्वर्यवत्तदधीनम । स्वभावत्वात् । तथा च विवरत्वादिकं ब्रह्मण्याकाशादिशब्दवृत्तौ न निमित्तमिति निमित्तत्वाभावे सापेक्षयोर्हेतुत्वम् । श्लोके सार्वविभक्तिकतस्यंतस्य ततश्शब्दस्य तत्रेत्यप्यर्थः । अस्मिन्मते तद्गतत्वपक्षोऽपि श्लोकेनैव दूषितः । मतांतरे तु बहिरेव दूष्यः ।।

सुधायां तु 'न तावद्विवरत्वादिकमैश्वर्यादिवदागन्तुकज्ञानादिरूपहेतुद्वारेश्वरायत्तम् । अचेतनाश्रितत्वात् । नापि स्वरूपतः । स्वभावत्वा' दिति व्याख्यातम् । तत्रेंद्रादिशब्दप्रवृत्तिनिमित्ते पालनादिरूपप्रयत्नात्मकैश्वर्ये ज्ञानादेरेव हेतुत्वदर्शनादत्रापि ज्ञानादिरेव हेतुर्वाच्यः । स चाचेतने नास्तीत्यभिप्रायः ।।

यत्तु सुधायां अतरधिकरणपूर्वपक्षेऽचेतनस्वभावस्यान्नत्वादेर्भगवदधीनत्वांगीकरणम् तदेतदधिकरणसिद्धांन्यायानुसधानेन । न ह्येतदधिकरणपूर्वपक्षस्थेनैव तत्रापि पूर्वपक्षिणा भाव्यम् । तथात्व एतदधिकरणसिद्धांतेनैव

तत्रत्यपूर्वपक्षनिरासेन तत्रत्यसिद्धान्तवैयर्थ्यात् । अनुव्याख्यानसुधाद्यनुसारेण चात्रापि टीकायां 'आकाशस्याचेतनत्वेनान्याधीनत्वायोगा'दित्यादावाकाशपदं तत्तदप्रवृत्तिनिमित्तपरम् । तस्मादाकाशादिशब्दानां क्लृप्तं रूढं वा 'आकाशनमवकाशत्व'मिति सुधोक्तं यौगिकं वा क्लृप्तं निमित्तं नेश्वरगतम् । नापि तदर्थान्तम् । आ समन्तात्काशत इति कल्प्यो योगस्तु क्लृप्तया भूताकाशे रूढ्या बाधितः । विद्वद्रूढिमहायोगौ त्वसिद्धौ । वैदिकप्रयोगबाहुल्यादेरप्यसिद्धेः ॥ यत्त्वानंदमयाधिकरणे —

अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगै'

रित्याद्यनुव्याख्यानं तदानन्दमयप्रकरणस्थाकाशादिशब्दानां ब्रह्मपरत्वायाकाशाद्यधिकरणे वक्ष्यमाणन्यायमुपजीव्य प्रवृत्तमिति न तेन विद्वद्रूढ्यादिसिद्धिः । तस्माद्युक्ताऽभ्यधिकाशंका ॥

इयं च प्रमेयाश्रिताऽऽकाशशब्दस्य ब्रह्मणि मुख्यत्वविरोधिनी शंका । प्रमाणाश्रिता वाक्यस्य ब्रह्मपरत्वविरोधिनी शङ्का तु' युक्तः पूर्वत्र श्रुतित्वमात्रप्रयुक्तप्राबल्यान्निरवकाशत्वप्रयुक्तप्राबल्यस्य बलवत्त्वान्निरवकाशलिंगेन श्रुतिबाधः । अत्र त्वाकाशश्रुतेः 'अकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यंति आकाशो ह्येवेभ्यो ज्यायान् आकाशः परायण'मिति बहुकृत्वः श्रुतत्वात् श्रुतित्वबहुत्वोभयप्रयुक्तप्राबल्यान्निरवकाशत्वमात्रप्रयुक्तप्राबल्यस्य दुर्बलत्वान्निरवकाशस्यापि लिंगस्य बाधः ॥

अत एव पूर्वत्र सवित्रादिश्रुतेरबहुत्वेन बाधेपीन्द्रश्रुतेर्बहुत्वान्न बाधः । एवं चेन्द्रश्रुतिः श्रुतित्वेन तत्रोदाहरणम् । बहुश्रुतित्वेनात्रापि । यथाग्निहोत्रादिशब्दो नामधेयतया नामधेयपादे तूदाहरणं समुदायानुवादापवादतया शब्दान्तरपादे' यथा च जीवकारणता श्रुतिप्राप्ततया द्वितीयस्याद्यपाद उदाहृता ॥ समयप्राप्ततया तु द्वितीयपादे यथा चायमेवाकाशशब्दोऽन्यत्र प्रसिद्धत्वेनात्रोदाहरणमुभयत्रप्रसिद्धत्वेन तु तृतीये तद्वदित्येका । अपरा तु युक्तमन्यत्र निरूढानामपीन्द्रादिशब्दानां श्येनादिशब्दानां यजिसामानाधिकरण्यवत् 'मत्सीन्द्रमिन्दो पवमान विष्णुं इत्यादौ विष्णुशब्दसामानाधिकरण्यात् 'यो देवानां नामधा'

इति विशेषश्रवणादन्यत्रानिरूढान्तस्स्थत्वमुखसद्भावाच्च विष्णुपरत्वम् । उत्पत्तिशिष्टसोमावरुद्धेऽपि याग उत्पन्नशिष्टस्य फलचमसस्य भक्षणमुखेनानुप्रवेशवदर्थांतरावरुद्धेऽपीन्द्रादिशब्देऽन्तस्स्थत्वमुखेन ब्रह्मप्रवेशाविरोधात् ॥

आकाशशब्दस्य तु क्वापि तत्सामानाधिकरण्याभावाद्विशेषश्रुत्यभावादन्यत्रानिरूढमुखाभावाच्च आमिक्षावरुद्धे यागे वाजिनवद्विरोधान्न विष्णुपरत्वमिति ॥

अन्या तु आकाशशब्दस्योपक्रमस्थत्वेन श्रुतित्वेन च प्रबलत्वादिन्द्रबृहस्पत्यादिशब्दवच्च परस्परविरुद्धनानार्थोपस्थापकत्वाभावेनैकवाक्यत्वभङ्गाभावात् आकाशब्रह्मणोर्विरुद्धांशत्यागेनैक्याङ्गीकारे च पूर्वत्रेवात्र बाधकस्य भेदव्यपदेशस्याभावाच्चाकाशशब्दः प्रसिद्धार्थपर इति प्रबलश्रुत्यनुसारेण चानन्तत्वादिलिङ्गानि कथंचिद्भूताकाशे योज्यानि ॥

एताश्च प्रमाणाश्रिताः शङ्का **अनुव्याख्याने** 'आकाश इति नाम चे'त्यन्यत्रानिरूढमुखान्तरेण विष्णुशब्दसामानाधिकरण्येन विशेषश्रवणेन च रहितनामोक्त्या अत्र भाष्यटीकयोरसकृत् श्रुतोपक्रमस्थाकाशैकशब्दवतो भेदव्यपदेशशून्यस्य च विषयवाक्यस्योदाहरणेन च सूचिताः ॥

ननु च भूतप्रकरणाद्भूतकारणत्वलिङ्गाच्च भाष्ये भूताकाशस्य प्राप्तिरित्युक्तम् । **अनुव्याख्याने** च विवरत्वादिराकाशस्वभाव इत्युक्तम् । तत्कथम् । अवकाशरूपाव्याकृताकाशस्वभावत्वाद्विवरत्वस्येति चेन्न । 'प्राणेन सृष्टावन्तरिक्षं च वायुश्च अन्तरिक्षं वा अनुचरन्ती'त्यादि श्रुत्या—

'शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् । भूतानां च्छिद्रदातृत्व'मित्यादिस्मृत्या चाचार्यैः प्राणिसञ्चरणाद्यनुकूलत्वरूपं विवरत्वं भूताकाशस्य स्वभाव इत्यङ्गीकारेणाविरोधात् । एवं चाधिकाशङ्कया पूर्वपक्षोत्थानान्न पूर्वेण गतार्थता ॥

यद्वा येन समुद्रान्तस्स्थत्वादि लिङ्गेन पूर्वत्र सिद्धान्तो न तेनैवात्रापि । किं त्वनन्तत्वादिलिंगान्तरेणैव । एवं चात्र पूर्वपक्षेऽन्तरधिकरणे भाष्योदाहृतश्रुत्यादिना समुद्रान्तस्स्थत्वादेर्विष्णुलिंगत्वनिश्चयेऽप्यनन्तत्वादेस्तदनिश्चयादाकाशश्रुतिबलाच्चाकाशस्यैवानन्तत्वादिनिश्चयाद्युक्तोऽभ्यधिकाशङ्काभावेऽपि पूर्वपक्षो

दयः। एवं ज्योतिरधिकरणादावपि पूर्वपक्षेऽनन्तत्वादेर्विष्णुलिंगत्वनिश्चयेऽपि कर्णादिविदूरत्वादेस्तदनिश्चयाज्ज्योतिःश्रुत्यादिबलाच्चाग्न्यादेरेव कर्णादिविदूरत्वनिश्चयादभ्यधिकाशङ्काभावेऽपि पूर्वपक्षोदयः। अत एव तत्तदधिकरणसिद्धान्तभाष्येऽनन्तत्वकर्णादिविदूरत्वादीनां विष्णुलिंगत्वसमर्थनम्॥

अत एव च भाष्येऽभ्यधिकाशङ्कानुक्तिः। **अनुव्याख्याने** तदुक्तिस्त्वनन्तत्वादिलिंगानां स्वतोऽवकाशराहित्यरूपं निरवकाशत्वमुपेत्य तदनुसारेणाकाशादिश्रुतीनां ब्रह्मण्यमुख्यत्वे प्रबलश्रुत्यनुसारेण दुर्बलस्यानन्तत्वादिलिंगस्यैवाकाशादावमुख्यत्वं स्यात्। सिद्धांत्यभिमतगुणपूर्त्यर्थसमन्वयश्च न सिध्येत्। श्रुतीनां ब्रह्मणि मुख्यत्वं तु न युक्तम्। प्रवृत्तिनिमित्तस्य तदधीनत्वादेरभावादिति पूर्वपक्षदार्ढ्याय स्वभावनियामकत्वरूपमहागुणलाभाय चेति द्रष्टव्यम्। तस्मान्न पूर्वेण गतार्थत्वम॥

'तदधीनत्वा'दित्यत्र सर्वस्येश्वराधीनतामङ्गीकृत्य तस्याः प्रवृत्तिनिमित्तत्वं नेति प्राप्तेऽस्तीति सिद्धान्तः। आकाशोऽर्थांतरत्वादीत्यत्र त्वाकाशशब्दप्रवृत्तिनिमित्तस्य भगवदधीनता 'आकाश इति होवाचे'त्यादावाकाशशब्दस्य विष्णुपरतां चाङ्गीकृत्य आकाशो वै नाम नामरूपयोर्निर्वहिते'त्यादौ वै नामेति प्रसिद्धिद्योतकनिपातबलात्प्रसिद्धाकाशार्थत्वे शङ्किते तन्निरासः। न चात्रापि सर्वाणि ह वा इमानि भूतानी'ति ह वै शब्दश्रवणात्प्रसिद्धार्थतेति शङ्क्यम्। तस्य भूतसन्निधानेन भूतेष्वेव प्रसिद्धिप्रतीतेः। 'कारणत्वेन चाकाशादि'ष्वित्यत्रापि पूर्ववदुभयमप्यङ्गीकृत्य 'आत्मन आकाशः संभूत' इति संभूतत्वादिलिंगैर्भूताकाशपरत्वे शङ्किते तन्निरासः। इह त्वाकाशशब्दस्य भगवति मुख्यत्वार्थं प्रवृत्तिनिमित्तस्य भगवदधीनत्वमुच्यते। ततश्चैतदधिकरणाभावे क्वापि वाक्ये तस्य भगवति न मुख्यत्वं सिध्यति। 'न वियदश्रुते'रित्यत्र तु भूताकाशस्येश्वरादुत्पत्तिरेव वक्ष्यते। न तु तत्स्वभावस्येश्वराधीनत्वमिति न तैर्गतार्थता। अधिकाशङ्कानिरासेन सिद्धान्तस्त्वित्थम् —

चिद्गतस्येशतन्त्रत्वे स्यादेवाचिद्गतस्य तत्।
यतोऽत्यन्तपराधीनं चेतनादप्यचेतनम्॥ १॥

अस्ति च राजा जयीति प्रयोग इव जडगतस्य मृत्त्वादेरभिमानिदेवताधीनत्वाद्देवताया मृदब्रवीदित्यादिप्रयोगः । तस्माद्विवरत्वादिकमचेतनगतत्वान्नेश्वराधीनमिति मतं न युक्तम् । नापि स्वभावत्वात्तदनधीनत्वमिति मतं युक्तम् ॥

अस्तु खं च्छिद्रमिति या हरीच्छा तद्वशान्नभ. ।
छिद्रात्मकं हि संजातमन्यथा निबिडं भवेत् ॥ १ ॥

लोकेऽपि हि—

कुम्भस्वभावः कुम्भत्वं पुंतन्त्रं धर्मिणा सह ।
न शरावार्थयत्नेन कुम्भाकारो हि सिध्यति ॥ २ ॥
ययैव हि मृदा कुम्भः कुम्भकारेण निर्मित· ।
तयैव च मृदा कर्तुं शरावाद्यपि शक्यते ॥ ३ ॥

किंतु कुम्भादौ कुलालाद्यसङ्कल्पितमपि बहु जायते । ईश्वरासङ्कल्पितं तु नाणुमात्रमपि जायत इति विशेष· ॥

किंचोत्पत्त्यनन्तरमप्याकाशस्य विवरत्वं निह्नुयाविवरत्वं संपादयितुं शक्त ईश्वरः । तथेच्छाभावात्तु न संपादयति ॥

औषधादिवशाल्लोके ताम्रादेरप्यताम्रताम् ।
कुर्वन्तीशस्तु नेष्टे किं छिद्रस्याच्छिद्रताकृतेः ॥ १ ॥

तस्मादन्यथाकरणाभावेऽप्यन्यथा कर्तुं शक्यत्वाद्यथेष्टविनियोगार्हत्वाऽस्त्येव । बोधयन्ति च श्रुतिस्मृतयः स्वभावस्यापीश्वराधीनत्वम् ॥

स्यंदन्ते शासनान्नद्यो भीषाऽस्मात्पवतेऽनिलः ।
नभो ददाति श्वसतां मार्गमित्यादिकाश्च ताः ॥ १ ॥

एवं च यथा नवमोक्तरीत्या 'स्रुवेण पार्वणौ होमा'वित्यत्र पर्वशब्द· प्रीयते दीयतेऽस्मिन्निति दर्शादिकाले यौगिको न तु रूढः तथा 'आकाशनमाकाश' इति सुधोक्तरीत्या यौगिकाकाशशब्दप्रवृत्तिनिमित्तस्याकाशगतस्य विवरत्वरूपस्यावकाशप्रदत्वस्य न केवलमीश्वरायत्तत्वात्तत्र तस्य महायोगः । किंतु परिच्छिन्नादाकाशादप्यपरिच्छिन्ने ब्रह्मणि 'सर्वभूतगुणैर्युक्त'मित्यादिवचनात् तस्य निरवधिकत्वादपीति द्रष्टव्यम् । अत एवोक्तं सुधायां 'न हि

देशकालाभ्या परिच्छिन्नस्यावकाशदातृत्वं निरवधिक'मिति 'आकाशस्यावकाशदातृत्वस्येश्वरायत्तत्वमीश्वरस्यापि पृथक् तद्धत्वं चे'ति च ॥

एवं च यत्पूर्वपक्षिणाऽवकाशप्रदत्वस्याचेतनस्वभावत्वमुक्तं तदभिमानमात्रेण। सिद्धांते तस्येशन्तत्रत्वसमर्थनं च स्वभावनियामकत्वरूपमहागुणसिद्ध्यर्थं जडमात्रस्वभावनिमित्तकशब्दांतरसमन्वये न्यायः फलिष्यतीति प्रदर्शनार्थं च कृत्वाचिंतया युक्तम्। यथा तृतीये 'इन्द्रपीतस्ये'ति मन्त्रस्य मैत्रावरुणादिशेषभक्षणे वस्तुत ऊहाभावेऽपि न्यायव्युत्पादनार्थमूहविशेषनिरूपणार्थान्यनेकान्यधिकरणानि कृत्वाचिंतया युक्तानि तद्वत्। आसमन्तात्काशत इति वा आ समन्तात्कमश्नातीति वा ईश्वरे यौगिकत्वं तु भगवत्पादैरन्यत्रोक्तत्वात्पूर्वपक्ष्यभिमतरूढार्थमुखेनैव ब्रह्मणि वृत्तेस्तद्वाधोऽपि नेत्युक्तिदशायामनुपयोगाच्चेह नोक्तम्। अत एव विद्वद्रूढिरपि सिद्धा। वैदिकप्रयोग बाहुल्यात्। एवमुत्तराधिकरणेष्वपि विद्वद्रूढ्यादिकमुपपाद्यम्। तस्मादाकाशशब्दो ब्रह्मणि मुख्यः। अनन्तत्वादिलिङ्गानि तु निरवकाशानि ॥

अन्तत्रयोज्झिते विष्णौ निरूढं लोकवेदयोः।
अनन्तत्व कथं तिष्ठेद्भूतेऽतत्रयसंयुते ॥ १ ॥

यद्यप्यव्याकृताकाशे गुणतोऽनंतत्वाभावेऽपि देशकालाभ्यामानंत्ये अनन्तशब्दस्य नैघण्टुकी प्रसिद्धिश्चास्ति। तथापि पूर्वपक्ष्यभिमतेंऽतत्रयवति भूताकाशे ते अपि न स्तः। निरूढश्चान्तत्रयतहीने विष्णौ भाष्योक्त श्रुतितो लोकतश्च नामत्रयांतर्गतोऽनंतशब्दः। लोकप्रसिद्धिमाश्रित्यापि नाकाशश्रुत्या विष्णुलिङ्गं बाधार्हम् ॥

द्वाभ्यामावृत्तिजातिभ्यामेव हि प्रबला श्रुतिः।
अगतित्वपरत्वानेकत्वैर्लिंगानि तु त्रिभिः ॥ १ ॥

श्रुतिर्हि जात्याऽऽवृत्त्या च प्रबला। लिंगानि तु निरवकाशत्वचरमत्वानेकत्वैः। एवं च यदा च निरवकाशत्वप्रयुक्तमेव प्राबल्यं परनित्यांतरङ्ग प्रतिपदविधिषु परबलीयस्त्वमित्युक्तत्वात्' कांस्यभोजिन्यायेन सर्वप्राबल्यानां बाधकं तदा किमु वाच्यं चरमत्वादियुतमिति। परोवरीयस्त्वादिविष्णु

लिंगानां तु निरवकाशता मध्य एवोक्ता । दृश्यते च घृतादौ निरूढानाम प्याज्यादिशब्दाना मुख्यान्तरं विनैव 'आज्यैः स्तुवत' इत्यादौ तैस्तैर्हेतुभिः स्तोत्रादिनामधेयत्वम् । भूतकारणत्वादि तु भूतलिंग श्रुत्यन्तरानुसारेण विष्णावेव मुख्यम् । तस्मादाकाशादिशब्दवाच्यो विष्णुरिति ॥

अत्रोभयेऽप्याहुः । 'आकाश इति होवाचे'त्याकाशे निरूढप्रथमानुप संजातविरोध्याकाशपदानुरोधेन बहून्यपि चरमाणि सर्वकारणत्वज्यायस्त्वानन्त त्वादीनि भूताकाशे कथं चियोज्यानीति प्राप्ते यद्यप्याकाशपदं सर्वाणीत्यादितः प्रथमं तथापि परिहारवाक्यस्थाकाशपदादपि प्रथमानुपसंजातविरोधिप्रश्नानु सारेण चरमस्योत्तरस्य नेयत्वादस्य लोकस्य का गतिरिति प्रश्नस्य च दृश्यमानसर्व प्रपञ्चविषयत्वात्सर्वलोकगतिरेवाकाशपदेन प्रतिवक्तव्या । न च लोकान्तर्गतो भूताकाशः सर्वलोकगतिः । किंच सर्वलोककारणत्वादिबह्वनुग्रहार्थमेकमाकाश पदं जघन्यवृत्त्या ब्रह्मपरं 'त्यजेदेकं कुलस्यार्थे' इति न्यायात् । तस्मात्सोपाधिकं ब्रह्मैवाकाशपदेनोपास्यत्वेनोपक्षिप्तमिति सिद्धान्त इति ॥

अत्र ब्रूमः । प्रथमानुसारेण चरमास्वारस्ये पूर्वाधिकरणेऽपि प्रथम- हिरण्यश्मश्रुत्वाद्यनुसारेण चरमं पापातीतत्वं जीवे कथञ्चिन्नेयं स्यात् । इहापि हि प्रश्नस्यानुरोध्यत्वे प्राथम्यमेव हेतुः । प्रश्नोत्तरयोरेकविषयत्वस्योत्तरानुसारेण प्रश्नव्याख्यानेऽपि सिद्धेः । किंच —

प्रकृतां पृथिवीं वक्ति प्रश्नस्थं सर्वनाम यत् ।
तस्मात्तदनुरोधी चेत्सममाधिश्च तथा भवेत् ॥ १ ॥

तथा हि । 'असौ लोक'इत्यादिना दाल्भ्योक्तं स्वर्गलोकस्य सामा- श्रयत्वं शालावत्यः 'अप्रतिष्ठितं वै किले'त्यादिना दूषयित्वा 'अयं लोक'इत्या दिना पृथिवीलोकः सामाश्रय इत्यूचे । प्रवाहणस्तु तं 'अन्तवद्वै किले'त्या दिनाऽदूषयत् । तदस्य लोकस्य का गतिरिति शालावत्येन प्रकृतपृथिवीलोकगति रेव पृष्टा न सर्वगतिः । अस्येति सर्वनाम्न. 'प्रास्मा अग्नि'मित्यादाविव प्रकृत परत्वात् । तथाच प्रश्नानुसारेणोत्तरव्याख्याने 'सर्वाणि ह वा'इत्यत्र सर्वशब्दः पृथिवीमात्रपरः स्यात् । न च पृथिवीकारणस्यापि प्रसिद्धत्वेन प्रश्नवैयर्थ्यम् ।

सर्वलोककारणस्यापि वाक्यान्तरतः प्रसिद्धेः । लोकनस्त्वपां पृथिवीकारणत्वस्याप्यप्रसिद्धेः । न च पृथिवीमात्रकारणप्रश्ने आप इति वक्तव्यत्वात्प्रतिवचने आकाशपदं सर्वाणीति सर्वपदमाकाशादेवेत्यवधारणं चायुक्तम् । तस्मात्प्रश्नेऽपि सर्वलोकगतिविषय इति वाच्यम् । भामत्यां प्रश्नानुरोधेनोत्तरव्याख्याना'दित्युक्तत्वेनोत्तरानुसारेण प्रश्नव्याख्यानेऽन्योन्याश्रयात् ॥

यच्चोक्तं 'त्यजेदेकं कुलस्यार्थे' इति तन्न । आकाशश्रुतेः प्रधानत्वादप्रधानानेकलिङ्गबाधस्यापि 'आत्मार्थे पृथिवीं त्यजे'दिति न्यायसिद्धत्वात् । उक्तं हि षष्ठे प्रधानखदिराबाधाय तक्षणाद्यनेकगुणबाधेन तक्षणाद्ययोग्योऽपि पशुनियोजनयोग्यः खदिर एवोपादेयो न तु तक्षणादियोग्यः खदिरप्रतिनिधिः कदर इति । न हि त्वत्पक्षे ब्रह्मण्याकाशशब्दो मुख्यः ।

किंच —

कारणे कार्यगा यद्वत्तथा कार्येऽपि हेतुगाः ।
व्यपदेष्टुं हि शक्यन्ते धर्मा ऐक्याविशेषतः ॥ १ ॥

पूर्वाधिकरणे त्वत्पक्षे कार्यगतस्य हिरण्यश्मश्रुत्वादेः कारणे व्यपदेश इवेह कारणब्रह्मधर्माणां सर्वकारणत्वादीनां भूताकाशे व्यपदेशोऽस्तु । तयोरभेदाविशेषात् । किंच —

विशिष्टविषयत्वं चेदनन्तत्वाद्यसंभवः ।
विशुद्धविषयत्वं चेज्ज्यायस्त्वादेरसंभवः ॥ १ ॥

न हि सोपाधिके परिच्छिन्ने ब्रह्मण्यनन्तत्वादिकम् । नापि निर्विशेषे ज्यायस्त्वादिकम् । न हि ज्यायस्त्वमपरिच्छिन्नत्वम् । अनन्त इत्यनेन पुनरुक्तेः । किंतु परिमाणाधिक्यं गुणाधिक्यं वा । न च तन्निर्विशेषेऽस्ति ॥

यद्यपि वस्तुतो निर्विशेषे आरोपितो विशेषो न विरुद्धः । तथापि त्वदुक्तः सविशेषनिर्विशेषविद्ययोरधिकारिभेदः फलभेदो विद्याभेदेन पादभेदश्च न स्यात् । एवमुत्तराधिकरणविषयवाक्येष्वपि सगुणनिर्गुणोभयलिङ्गयुक्तेषु दोष ऊह्यः । किंच सूत्रोक्तं लिङ्गं न तावद्ब्रह्मणि तत्वतोऽस्ति ॥

यदि चारोपित लिङ्ग तस्मान्या ब्रह्मतापि हि ।
आरोपिता स्यादेव च पूर्वपक्षः स्थिरो भवेत् ॥ १ ॥

तस्मान्मतान्तरमयुक्तं ॥ **टीकाक्षरार्थस्तु — अस्ति शास्त्रादि-सङ्गतिरिति** । अत्र ब्रह्मणीत्यनेन शास्त्रसङ्गतिः समन्वयेत्यनेनाध्यायसङ्गतिः अन्यत्र प्रसिद्धनाम्न इत्यनेन पादसङ्गतिः सूचिता । एवमुत्तरत्रापि द्रष्टव्यम् ॥

॥ इत्याकाशाधिकरणम् ॥

[ प्राणाधिकरणम् ]

## ९ – ॐ अत एव प्राणः ॐ ॥ १-१-९ ॥

अत्राध्यात्मिकप्राणादिशब्दसमन्वय उच्यते । अत्रापि प्राणशब्दप्रवृत्ति निमित्तं जीवनादिहेतुत्वमन्वयव्यतिरेकाभ्यां प्राणशब्दार्थत्वेन प्रसिद्धस्य वायो रेवेति स एव प्राणशब्दवाच्यो न तु विष्णुरित्यधिकाशङ्कानिरासेन पूर्वन्याय एवातिदिश्यत इत्यातिदेशिक्यवान्तरसङ्गतिः । भूताकाशस्य त्ववकाशहेतुत्वे ऽन्वयव्यतिरेकौ न स्तः । परिच्छिन्नस्य तस्याभावेऽपि क्वचिदवकाशदर्शनात् ॥

यद्यप्यत्र 'तद्वै त्वं प्राण' इत्यत्र प्राणस्य विष्णोरन्यत्वे 'प्राणं देवा' इत्यादावप्यन्यत्वं स्यादित्यपि प्रयोजनं वक्तुं शक्यं तथापि सूत्रे कंठोक्तानन्दम यत्वाक्षेपो दर्शनीय इति भाष्यादौ तदुक्तिः । अत एवानन्दमयोक्ताया विष्णोः प्राणताया इहाक्षेपान्न तेन गतार्थता । नापि प्राणशब्दस्योभयत्र प्रसिद्धता ॥

अत्र प्राणः किं मुख्य वायुरुत ब्रह्मेति चिंता । तदर्थं किं प्राणश्रुति प्रसिद्ध्यनुसारेण श्रीपतित्वादिलिंङ्ग बाध्यं किं वा विपरीतमिति । तदर्थं प्रसि द्धबाधे किं श्रुतेर्मुख्यत्वहानिरुत नेति । तदर्थं प्राणशब्दप्रवृत्तिनिमित्तं जीवन हेतुत्वं किं ब्रह्मणि नास्त्युतास्तीति । तदर्थं किं जीवनं मुख्यप्राणान्वयव्यति रेकानुविधाय्युतेश्वरान्वयव्यतिरेकानुविधायीति । तथा 'भर्ता सन्म्रियमाण' इत्यनुवाकस्थेन 'तद्वै त्वं प्राण इति' वाक्येनोक्तः प्राणः किं 'अद्भ्यः संभूत'

इत्यनुवाकस्थेन 'श्रीश्च ते लक्ष्मीश्च पत्न्या'विति वाक्येनोक्तादन्यः किं वाऽनन्य इति ॥

नन्वत्र प्राणो न तावज्जडरूपो वायुरिति पूर्वः पक्षः। जडं प्रति त्वं प्राणोऽभव इत्याद्युक्त्ययोगात। 'ओषधे त्रायस्वैन' मित्यादेश्च स्वमतेऽभिमानिदेवतापरत्वात्। मीमांसकमते चान्यपरत्वेनाचेतनसंबोधनपरत्वाभावात्। नापि मुख्यप्राण इति। जीवनस्य तदन्वयव्यतिरेकानुविधानादर्शनेनाधिकाशङ्कायोगात् ॥

नन्वाकाशाधिकरणपूर्वपक्षे जडस्याप्याकाशस्य आनन्दमयत्वादिकमिवात्रापि जडस्याप्यभिमानिद्वारा संबोधनादियुक्तम्। न च मुख्ये मुख्यत्वात्प्राणशब्दस्य कथं जडपरत्वेन पूर्वपक्ष इति युक्तम्। लोकप्रसिद्ध्या पूर्वपक्षयतो ब्रह्मणीव मुख्येऽपि मुख्यत्वज्ञानाभावादिति चेन्न। 'मुख्यवायावेव मुख्यत्वा'दित्यादिपूर्वपक्षटीकया 'प्रेरकोऽस्यापि यद्धरि'रित्याद्यनुव्याख्यानेन च विरोधात्। त्वमभवः करिष्यमाणः प्राणय इत्यादीनां बहूनाममुख्यार्थत्वाधाताच्चेति चेदुच्यते। प्रत्यक्षेण जीवनस्य मुख्यप्राणान्वयव्यतिरेकानुविधानाज्ञानेऽपि 'तत्प्राणे प्रपन्न उदतिष्ठत् तत्प्राण उत्क्रान्तेऽपद्यते'त्यादिवाक्यात्तज्ज्ञानम्। न च 'प्राणस्तथानुगमा'दिति वक्ष्यमाणन्यायेन 'तत्प्राण' इत्यत्र प्राणो विष्णुरिति युक्तम्। अत्रत्यसिद्धान्तन्यायेन प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वं विष्णोरङ्गीकृत्य निरवकाशान्यलिङ्गेन तत्र पूर्वपक्षोदयेन तद्विचारस्यैतत्सिद्धान्तानन्तरभावितयैतत्पूर्वपक्षदशायां तत्रत्यसिद्धान्तासिद्धेः। यथा 'आकाशोऽर्थांतरे'त्यस्य 'आकाशस्तल्लिङ्गा'दित्येतत्सिद्धान्तानन्तरभावितया 'आकाशस्तल्लिङ्गा'दित्येतत्पूर्वपक्षदशायामाकाशोऽर्थांतरेत्येतत्सिद्धान्तासिद्धिः तद्वत् ॥

एतेन प्राणस्तथेत्यनेनास्य गतार्थत्वशङ्कापि निरस्ता। एतदभावे ब्रह्मणो जीवनहेतुत्वाभावेन तत्र प्राणशब्दस्य मुख्यत्वासिद्धेः। अत एव टीकायामन्वयव्यतिरेकयोः 'यत्प्राप्तिर्यत्परित्याग' इति स्मृतिरेवोक्ता ॥

यद्वा कुलालशरीरस्य घटं प्रतीव मुख्यप्राणशरीरभूतवायोर्जीवनं प्रत्यन्वयव्यतिरेकदर्शनमात्रेण तस्य तत्र हेतुत्वम्। अत एवोक्तं सुधायां 'वायु

विकारशरीरत्वान्मुख्यम्ये'ति । ब्रह्मणस्तु सर्वगतत्वादशरीरत्वाच्च तस्य वा तच्छरीरस्य वा नास्मदादिशरीरेऽभाव इति न तद्व्यतिरेकाज्जीवनव्यतिरेकः ॥

यद्यप्यन्तर्यामीत्यत्रेशस्य गौणं यौगिकं वा शरीरमस्तीति वक्ष्यते। तथापि न जीवनव्यतिरेकस्य गौणादिशरीरव्यतिरेकानुविधानेन तत्कार्यत्वम्। अतिप्रसङ्गात्। भूमाधिकरणे तु सर्वगतस्यापीशस्यास्मदादिशरीरादुत्क्रमणमस्तीति च वक्ष्यते। न तु तत्राभावः। तस्मान्न विष्णोर्जीवनादिहेतुत्वमन्वयव्यतिरेककल्प्यम। नापि श्रुतिसिद्धम्। अन्वयव्यतिरेकानुसारेण 'येन जातानि जीवन्ती'त्यादेर्मुख्यप्राणविषयत्वात्। 'इतरेण तु जीवन्ती'त्यादावितरशब्दस्तु वायुवृत्तिरूपप्रसिद्धप्राणेतरत्वविवक्षया मुख्य प्राणेऽपि युक्तः ॥

केचित्तु 'अन्वयव्यतिरेकाभ्यां हि हेतुता कल्प्ये'ति सुधायाः प्रातीतिकार्थं गृहीत्वा हेतुताया अन्वयव्यतिरेकमात्रगम्यत्वान्न श्रुतिस्तत्र प्रमाणमिति पूर्वपक्ष्यभिप्राय इत्याहुः। तत्र यागादेः स्वर्गादावहेतुत्वापातात् ॥

अन्ये तु व्यतिरेकगर्भिताया हेतुतायास्तद्रहिते परमात्मन्ययोगान्न तस्य जीवनहेतुता श्रुत्यापि बोधयितुं शक्येति तदभिप्राय इत्याहुः। **तदपि न**। नित्यविभूनामहेतुत्वापत्तेः। तस्माज्जीवनादिहेतुत्वं न ब्रह्मगतम्। नाप्यन्यगतं तदधीनम्। जन्मादिसूत्रोक्तस्थितिहेतुताया असंभवादिप्रसंगात्। तस्मान्मुख्यवायुरेव प्राण इति स एवानन्दमयः। तस्यातरधिकरणे पूर्वपक्षितेद्रादिवदानन्दवल्ल्यामानंदमयात् भेदव्यपदेशाभावेनाकाशाधिकरणे पूर्वपक्षिताकाशवच्च जडत्वाभावेन स्वत एवानंदमयत्वसंभवात्। तस्मात् 'अन्वय व्यतिरेकत' इत्यनुव्याख्यानोक्ताधिकाशंका युक्ता। इयं च प्रमेयाश्रिता ॥

प्रमाणाश्रिता तु पूर्वत्राकाशश्रुतेरिवेह न श्रुतेरावृत्तिमात्रम्। किं तु 'त्वं प्राणः देवान्प्राणयः मातरिश्वे'ति श्रुतिबहुत्वमस्तीति निरवकाशेनापि न बाध इत्येका। इयं च भाष्ये बहुश्रुतियुक्तविषयवाक्योदाहरणात्सूचिता। अन्या तु यदि प्राणशब्दस्य योगेन विष्णुपरता तर्हि लक्ष्म्यादिशब्दानामपि योगेन प्राणभार्यापरत्वसंभवाल्लक्ष्मीपतित्वादिलिङ्गस्येत्वासिद्धिः। अथ लक्ष्म्यादि

शब्देषु न प्रसिद्धार्थत्यागः तर्हि प्राणशब्देऽपि तथा । इयं च 'प्रसिद्धे-र्वायु'रिति भाष्ये सूचिता ॥

इयं यद्यप्याकाशादिशब्दसाधारणी । आकाशश्रुतेः प्रसिद्धार्थहाना-वनंतत्वादिलिङ्गानामपि तद्धानिः स्यादिति शंकोदयात् । तथापि पूर्वाधिकरणे-ऽनुद्धृतेत्यधिकाशङ्का । अपरा तु मुख्यवायौ मुख्यप्राणत्वप्रसिद्धेः 'मुखे मुख्यः प्रकीर्तित' इति वचनाच्च प्राणशब्दस्य परमात्मनि मुख्यत्वायोगा-न्मुख्यसंभवे चामुख्यग्रहणायोगान्नात्र प्राणशब्दः परमात्मपरः । आकाश-शब्दस्य तु भूते मुख्यत्वे न प्रमाणमस्तीति । इयं च टीकायां मुख्यपदप्रयो-गादिना सूचिता । इतरा तु पूर्ववन्निरवकाशब्रह्मलिङ्गाभावान्न ब्रह्मपरतेति ॥

न च श्रीपतित्वादिकं लिंग निरवकाशमिति वाच्यम् । 'अद्भ्यः संभूत' इत्यनुवाके 'श्रीश्च ते लक्ष्मीश्च पत्न्या'वित्युक्तस्य विष्णुत्वेऽपि 'भर्ता सन् भ्रियमाण' इत्यनुवाके 'तद्रै त्वं प्राण' इत्युक्तस्य 'त्वं भर्ता मातरिश्वा प्रजाना'मिति मातरिश्वश्रुत्या 'प्राणापानावजिरं संचरंता'वित्यपानसाहित्यलिंगेन चा-विष्णुत्वात् । इयमपि शङ्का 'न चात्र वाक्ये पूर्ववदनन्यथासिद्धं लिङ्गमस्ति' इति सुधाग्रन्थेऽत्र पदेन सूचिता । तस्माद्युक्ताऽधिकाशङ्का । तत्परिहारेण सिद्धान्तस्तु —

'वायुवृत्तिर्यथा मुख्यप्राणदेहस्तथैव सः ।
विष्णोर्देहस्ततस्तस्यैवान्वयव्यतिरेकिता ॥ १ ॥

वायुवृत्तिर्मुख्यप्राणस्येव सोऽपि हि ब्रह्मणो देहस्थानीयः । युक्तश्च भूमाधिकरण ईश्वरस्यासदादिशरीरादुत्क्रमणस्य वक्ष्यमाणत्वादजीवनदशाया रूपविशेषस्य व्यक्त्यात्मना तत्संयोगाभावाद्व्यतिरेकः । 'इतरेणे'ति श्रुताविरतर शब्दो ब्रह्मपरः । पूर्वत्र 'मध्ये वामन'मिति वामनशब्दादुत्तरत्र च 'गुह्यं ब्रह्म सनातन'मिति ब्रह्मशब्दात ॥

किंच मुख्यप्राणस्य जीवनादिहेतुत्वेऽपि तस्य भगवदधीनत्वेनापि तत्र प्राणशब्दो मुख्यः । लक्ष्म्यादिशब्दानां तु बहुत्वादन्यत्र प्रयोगाभावा-न्मुख्यार्थत्यागापातादन्यपरत्वे मानाभावाच्च नान्यत्र यौगिकता । प्राणशब्दस्य

त्वेकत्वात् । 'प्राणस्य प्राण' इत्यादौ ब्रह्मणि प्रयोगात्तत्र परममुख्यत्वेन मुख्यार्थात्यागात् 'नामानि सर्वाणी'त्यादिमानसद्भावाच्च ब्रह्मपरता ॥

आपेक्षिकाच्च मुख्यत्वाद्वायौ मुख्यपदं भवेत् ।
यथा पराक्षरपदं श्रीतत्वे मध्यमाक्षरे ॥ १ ॥

मुख्यप्राणो हि करणभूतचक्षुरादिप्राणापेक्षया मुख्यः । दृश्यते च मध्यमाक्षरेऽपि श्रीतत्वे 'वामक्षरं प्राहु'रित्यादौ परशब्दो जडप्रकृतिरूपाधमाक्षरापरत्वात् । अत एव श्रुतिः 'प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य' इति । 'यो ऽयं'मध्यमः प्राण इति च ॥

अन्न इत्याद्यनुवाकद्वयस्य भिन्नार्थत्वेऽपि 'अन्न'इत्यत्र श्रीपतित्वादेरिव 'भर्तासि'न्नित्यत्र 'तमेव मृत्युममृतं तमाहुस्तं भर्तारं तमु गोप्तारमाहुः । यस्तद्वेद यत आ बभूव संधा च या संदधे ब्रह्मणैषत'इत्यादिब्रह्मलिङ्गाना सत्त्वात् । एतदेवाभिप्रेत्य भाष्यादौ 'इत्यादितल्लिंगा'दित्याद्यावादिशब्दः । कथं चानुवाकद्वयं भिन्नार्थम् । 'श्रीश्च ते' इति युष्मच्छब्देनोक्तस्य 'तद्वै त्वं प्राण'इत्यत्रापि युष्मच्छब्देन प्रत्यभिज्ञानात् । मातरिश्वश्रुतिरप्यंतरधिकरणन्यायेन 'हरिं हरंतमनुयंति देवा' इति हरिश्रुत्या हरंतमिति निरुपपदसंहर्तृत्वलिंगेन च ब्रह्मपरा । अपानसाहित्यं तु मुख्यप्राणेऽपि न स्वरसम् । तस्मात्प्राणो विष्णुरेवेति । तैत्तिरीयशाखायां 'ह्रीश्च त' इति पाठः । तथापि भाष्ये शाखान्तरमाश्रित्य श्रीश्च त इति पठितमिति द्रष्टव्यम् ॥

अन्ये तु 'प्रस्तोतर्या देवता प्रस्ताव'मित्युपक्रम्य श्रूयते 'कतमा सा देवता। प्राण इति होवाच । सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ती'ति । तत्र प्राणशब्दः प्रसिद्धप्राणपर इति प्राप्ते ब्रह्मपर एव । सर्वभूतसंवेशनादिब्रह्मलिंगादिति सिद्धान्तः ॥

न चैवं पूर्वेणेदं गतार्थम् । 'यदा वै पुरुषः स्वपिति । प्राणं तर्हि वागप्येति । प्राणं चक्षुः' इत्यादिश्रुतेः स्वापकाले प्रसिद्धप्राणे सर्वभूतसारेन्द्रियलयाद्युक्तिद्वारा सर्वभूतलयादिपरया मानान्तरानुगृहीतत्वेन प्रबलत्वात् । ब्रह्मणि भूतलयादिबोधिकायाश्च' यतो वा इमानी

स्यादिश्रुतेस्तदननुगृहीतत्वेन दुर्बलत्वात् । प्रस्तावक्यमपि प्रबलानुसारेण प्रसिद्धप्राणे सर्वभूतलयादिपरम् । न तु ब्रह्मणि सर्वभूतलयादिपरम् ॥

यद्वा प्रबलस्वापवाक्यानुसारेण प्रस्तावक्यमपि प्रसिद्धे प्राण इन्द्रिय मात्रलयादिपरम् । अकाशाद्वायुरित्यादिवाक्यं तु न मानान्तरानुगृहीतमिति तदनुसारेण 'सर्वाणि भूतान्याकाशादेवे'ति वाक्यं न वाय्वादिमात्रकारणभूताकाशपरमिति पूर्वस्मादधिकाशङ्कायां पुंवाक्ये मानातरानुग्रहतदभावाभ्यां प्राबल्यदौर्बल्ये स्तः । अपुंवाक्येऽनाशंकितदोषे न ताभ्यां ते स्त इति तन्निरासार्थत्वादस्येत्याहुः । तदुक्तं भामत्याम् —

'पुंवाक्यस्य बलीयस्त्वं मानान्तरसमागमात् ।
अपौरुषेयवाक्ये तत्सङ्गतिः किं करिष्यति'ती ॥

तन्न । पूर्वपक्षे प्राणस्य जडवायुत्वे प्रश्ने 'कतमा सा देवते'ति प्रतिवचने च 'सैषा देवते'ति देवताशब्दायोगात् । तदभिमानिचेतनत्वे च 'वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्त'मित्यादि त्वत्पूर्वपक्षभाष्यविरोधात् । स्वापवाक्ये मानान्तरसंवादस्यैवाभावेन तं स्वीकृत्य पूर्वोत्तरपक्षोक्त्ययोगाच्च । तथा हि —

न हि स्वापे पृथिव्यादेरक्षाणां वा विनाशधीः ।
प्रत्यक्षादनुमानाद्वा देवतायां जडेऽथवा ॥ १ ॥

न तावत्स्वापकाले जडे देवताया वा महाभूताना लयादौ मानान्तर संवादः । तेषां स्वापकालेऽप्यलीनानामेवानुभावात् । दृष्टिसृष्टिमते च तदा वायुविकारादेरप्यभावेन तत्र भूतलयायोगात् । नापि स्वापकाले जडे वा देवताया वेन्द्रियाणां लये प्रत्यक्षसंवादः । तेषामतीन्द्रियत्वात् । नापि स्वापकाले वायुवृत्तेरलोपादिन्द्रियवृत्तीना च लोपात्तत्र तेषां लयोऽनुमीयत इत्यनुमानसंवादोऽस्तीति वाच्यम् । त्वया जन्मादिसूत्रे ब्रह्मण उपादानत्वेऽपि श्रुतिसंवाद्यनुमानानामुक्तत्वात् ॥

यस्मिन्सव्यापारे सति यन्निर्व्यापारं तत्तत्र लीयत इति व्याप्त्य-भावाच्च । पूर्वेद्युर्येन दृष्टं तेनैव चक्षुषा पश्यामीत्यादिप्रत्यभिज्ञाविरोधाच्च ।

'यथा सोम्य वयांसि वासो वृक्षं संप्रतिष्ठंते एवं ह वै तत्सर्वं परमात्मनि संप्रतिष्ठत' इति प्रक्रम्य 'चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं चे'त्यादिना सुप्तौ चक्षुरादीनामनाशस्यैव श्रवणाच्च ॥

किं चाकाशाद्वाय्वाद्युत्पत्तिरपि मानान्तरसंवादिनी । अवकाशात्पवनस्य पवनाच्च फूत्कारादहनस्य दहनाच्चोष्मतः स्वेदस्य वृष्टितश्च पार्थिवपदार्थानामुत्पत्तेर्दर्शनादिति नाकाशवाक्यात्प्राणवाक्येऽधिकाशङ्का ॥

न च 'कतमा देवतोद्गीथमन्वायत्ता । आदित्य इति होवाचे'त्यादिनोद्गीथादावादित्यादेरब्रह्मण एव देवतात्वेनोक्तत्वात्तत्सन्निहिते प्रस्तावेऽप्यब्रह्मण एव देवतात्वमित्यधिकाशंकेति वाच्यम् । पूर्वाधिकरणेऽपि 'अपां का गतिरिति । असौ लोक इति होवाचे'त्यादिकेनाब्रह्मण एव गतित्वेनोक्ततया तत्सन्निधानादस्य लोकस्य का गतिरिति वाक्येऽप्याकाशस्याब्रह्मत्वं युक्तमिति साम्यात ॥

यच्चोक्तं पुंवाक्यस्येत्यादि, तत्र ब्रूमः —

अपुंवाक्यद्वयेऽप्येकेनान्यानुसरणे ध्रुवम् ।
कर्तव्ये सति क्लृप्तत्वात्संवाद्येवानुरुध्यताम् ॥ १ ॥

तथा हि । प्रमाणभूते पुंवाक्ये प्रत्यक्षादौ च संवादिन एवानुसरणीयत्वं क्लृप्तमितीहापि तथैव युक्तम् । अर्थाबाधरूपप्रामाण्यस्य संवादेन दार्ढ्यात् । अनपेक्षत्वस्य च दैवात्संवादेनाहानेः । सप्रयोजनत्वाय च प्रस्तावावाक्यस्यापूर्वार्थत्वे स्वापवाक्येऽपि तत्प्रसङ्गात् । स्वापवाक्यस्याप्यभिमानिदेवतापरत्वेऽपूर्वार्थत्वसंभवाच्च । अनाशङ्कितदोषत्वात्तु द्वयोरपि प्रामाण्यम्, न त्वन्योन्यमननुसरणम् । अन्यथा श्रुत्या श्रुत्यन्तरसंवादः उपक्रमाद्यानुगुण्यं च नानुसरणीयं स्यात् । मानान्तरविरोधश्च न परिहार्यः स्यात् । उक्तं च भामत्यामपि ' यद्यपि श्रुतयः स्वतः प्रमाणतयाऽनपेक्षाः । तथापि मानान्तरोपनीतार्थवशेन व्यवस्थाप्यन्त' इति । तस्मात्परेषामधिकरणमयुक्तम् ॥

केचित्तु कृत्स्नस्य जगतः प्रसिद्धप्राणाधीनप्रवृत्त्यादिदर्शनात्प्रस्तावावाक्ये

प्रसिद्धप्राण एवोच्यत इत्याकाशाधिकरणादधिकाशङ्काया शिलाकाष्ठादिषु तद-भावात् 'सर्वाणी'त्यस्यायोग इति परिहारोऽभिप्रेत इत्याहुः । तन्न । प्राणाधीनप्रवृत्तिकं शरीरमिव तदनधीनप्रवृत्तिकं शरीरादन्यदपि बहु पश्यतः पूर्वपक्षिणः सर्वं प्राणाधीनप्रवृत्तिकमिति शङ्कायोगात् ॥ ग्रन्थस्तु स्पष्टार्थः ॥

॥ इति प्रणाधिकरणम् ॥

[ ज्योतिरधिकरणम् ]

## 10 – ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ १-१-१० ॥

अत्र त्रीणि दर्शनानि । ज्योतिरित्यादिचतुस्सूत्र्येकमधिकरणम् । विषयवाक्यं त्वग्निसूक्तस्थं 'ज्योतिर्हृदय अहितं य'दितिवाक्यमेवेत्येकं मतम् ॥ इदं च ज्योतिरित्यस्य सूत्रस्याग्निसूक्तस्थं वाक्यमेवोदाहृत्य 'इदं चैकमधिकरण'मिति वदतस्तत्त्वप्रदीपकृतोऽभिप्रेतम् ॥

मतांतरं तु चतुस्सूत्र्या एकाधिकरणत्वेऽपि विषयवाक्यं ज्योतिरित्य-स्यापि 'अथ यदतः परो दिवो ज्योति'रिति छांदोग्यवाक्यमेवेति । इदं च 'छन्दोभिधाना'दितिसूत्रव्याख्यानरूप 'नित्यत्वादेव शब्दनां'इत्यनुव्याख्यानं ज्योतिश्चरणाभिधानादित्यधिकरणं तात्पर्यतो विवृणोती'त्यवतार्य ज्योतिरिति सूत्रस्य छांदोग्यवाक्यमेवोदाहरतस्सन्न्यायरत्नावलीकारस्याभिप्रेतम् ॥

मतान्तरं तु ज्योतिस्सूत्रमेकमधिकरणम्, छन्द इत्यादित्रिसूत्री त्वाधिकरणान्तरमिति । इदं च टीकाकारस्याभिप्रेतम् । न चात्राद्यपक्षेऽग्निसूक्ते गायत्रीरूपछन्दोऽभिधानभूतादिपादव्यपदेशोपदेशभेदानामभावेन छन्दोऽभिधा नादित्यादेरयोग इति वाच्यम् । ज्योतिर्हृदय आहितं यदित्यग्निसूक्तस्थस्यैव ज्योतिषश्छान्दोग्येऽपि ज्योतिरश्रुत्या 'योऽयमन्तर्हृदय' इति हृदयनिहितत्व धर्मेण च शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैकत्वात् । अन्यथाऽने काधिकरणपक्षेऽपि छान्दोग्योक्तस्य ज्योतिषो 'गायत्री वा इदं सर्व'मिति

श्रवणाच्छन्दस्त्वेऽप्यग्निसूक्तस्थस्य छन्दस्त्वानापत्त्या पूर्वाधिकरणसिद्धान्ताक्षेपेणोत्तराधिकरणपूर्वपक्षो न स्यात् । तथा च छन्दोऽभिधानादित्यस्यायमर्थः । अग्निसूक्तस्थं ज्योतिर्न विष्णुः । अस्यैव ज्योतिषः छान्दोग्ये गायत्रीत्वाभिधानादिति । एवं भूतादिपादव्यपदेशादावपि द्रष्टव्यम् ॥

न च पूर्वपक्षेऽग्निसूक्तस्याग्निपरत्वाच्छान्दोग्यस्य च छन्दःपरत्वात्प्रत्यभिज्ञायोग इति शंक्यम् । अस्मिन्मते 'तेजो वै ब्रह्मवर्चस गायत्री'ति श्रुतावग्निशब्दानतिभिन्नार्थतेजश्शब्दगायत्रीशब्दयोः सामानाधिकरण्यदर्शनेनाग्नौ गायत्रीशब्दस्य गायत्र्यां चाग्निशब्दस्य संभवेन अग्निसूक्तवच्छान्दोग्यस्याग्निपरतायाश्छान्दोग्यवदग्निसूक्तस्यापि गायत्रीपरतायाश्च संभवेन द्वयोरप्येकार्थत्वात् । न चाग्निसूक्तस्थेन कर्णादिविदूरत्वेन 'तदेतद्दृष्टं च श्रुतं चे'ति छान्दोग्यस्थदृष्टत्वादिकं विरुद्धमिति शङ्क्यम् । आकारभेदेनाविरोधात् । एकाधिकरणत्वादेव हि 'छन्दोऽभिधाना'दिति सूत्रे समन्वेतव्यशब्दान्तरमनुक्त्वा 'विकारशब्दान्नेति चे'दित्यादाविव पूर्वसूत्रोक्तसमन्वयबाधकमात्रमुद्धृतम् । भाष्येऽपि छन्दस्सूत्रव्याख्यानावसारे 'अग्निगायत्र्यादी'त्यग्निपदं प्रयुक्तम् । तस्मादाद्यं मतं युक्तम् ॥

द्वितीयेऽपि छान्दोग्ये चरणाभिधानाभावेऽप्युक्तरीत्या वाक्यद्वयोक्तस्य ज्योतिष एकत्वात् 'चरणाभिधाना'दित्येतन्न व्यधिकरणम् । तथा च चरणाभिधानादित्यस्यायमर्थः । छान्दोग्यस्थं ज्योतिर्विष्णुः । अस्यैव ज्योतिषोऽग्निसूक्ते विचरणाभिधानादिति । यद्यपि छान्दोग्योक्तस्य ब्रह्मत्वे 'यद्वै तद्ब्रह्मे'त्यादिश्रुतिलिङ्गानि स्ववाक्यस्थानि सन्ति । तथापि तत्तत्सूक्तस्थनिरवकाशविष्णुलिङ्गैः सावकाशश्रुतिसूक्तबाधेन भिक्षुकपादप्रसरणन्यायेन सर्ववेदानां विष्णौ समन्वयं दर्शयितुं सूत्रकारेणाग्निसूक्तस्य लिङ्गमुक्तम् । तस्माद्द्वितीयमपि निरवद्यम् ॥

यद्वा मतद्वयेऽपि वाक्यद्वयमप्युदाहरणम । यथा ह्यग्निसूक्तस्थवाक्ये प्रकरणानुगृहीतश्रुत्या पूर्वपक्षः, तथा छान्दोग्येऽपि 'गायत्री वा इदं सर्वं'मित्युपक्रमात 'सैषा चतुष्पदा षड्विधा गायत्री'तिचोपसंहाराचस्य गायत्रीप्रकरणत्वेन तदनुगृहीतज्योतिःश्रुत्या पूर्वपक्ष इति पूर्वपक्षयुक्तिसाधारण्यात् । तथाग्नि

सूक्ते निरतिशयवैभवत्वलक्षणचरणेन सिद्धान्तवच्छान्दोग्येऽपि 'एवमेव नातिशीयन्त'इति निरतिशयवैभवरूपेण चरणेन सिद्धान्त इति सिद्धान्तयुक्तिसाधारण्याच्चैकाधिकरणता। यथाऽऽधाराग्निहोत्राद्यधिकरणेषु 'आघारमाघारयति अग्निहोत्रं जुहोती'त्याद्युदाहरणभेदेऽपि द्रव्यदेवतालक्षणयागरूपाभावान्नानयोर्योगविधित्वमिति पूर्वपक्षयुक्तिसाधारण्यान्मन्त्रवर्णादिना देवतादिलाभान्न रूपाभाव इति सिद्धान्तयुक्तिसाधारण्याच्चैकाधिकरणता तद्वत्। छन्दःसूत्रे तु छन्दश्शब्दोऽग्नेरप्युपलक्षकः। अत एव 'अग्निगायत्र्यादी'ति भाष्येऽग्निपदप्रयोगः। उपदेशभेदादिपूर्वपक्षयुक्तिः 'भूतादिपादे'ति सिद्धान्तयुक्तिश्च छान्दोग्यवाक्यमात्रासाधारणी। एवं च यथाऽर्थवादनये भट्टमत एको विचारोऽर्थवादमन्त्रादिसाधारणोऽन्यस्त्वर्थवादमात्रासाधारण इति द्विपर्वा विचारः तथा ऽत्राप्युक्तरीत्या द्विपर्वा विचारः। अत एवास्य तत्वप्रदीपेऽन्तर्भेदाधिकरणत्वमुक्तमिति दिक्॥

तृतीयेऽपि 'कंपनात् शब्दादेव प्रमित' इत्यादाविवाधिकरणान्तरत्वेऽपि समन्वेतव्यशब्दान्तरस्य साक्षादनुक्तिर्न विरुद्धा। सूचनं तु प्रकृतेऽपि 'छन्दोभिधाना'दित्यनेन कृतम्। भाष्येऽग्निपदं त्वन्यत्र प्रसिद्धगायत्रीपदस्य विष्णौ प्रयोगे प्रयोजनमत्र वदता सूत्रकृता पूर्वत्रोत्तरत्र चाग्न्यादिपदस्य विष्णौ प्रयोगे प्रयोजनं सूचितमिति दर्शयितुम्। अन्यथा मतान्तरेपि 'अग्निगायत्र्यादी'त्यादिपदं व्यर्थं स्यात्॥

अनुव्याख्यानन्यायविवरणयोर्ज्योतिरित्यत्राधिकाशङ्कानुक्तिस्तु 'अग्निसूक्तस्थत्वा'दिति भाष्य एवोक्तत्वात्। न तु तस्यैकाधिकरणत्वात्। 'अधिभूताध्यात्माधिदेवगतानामपि शब्दाना'मिति न्यायविवरणे ज्योतिरधिकरणस्य पृथगुपाध्यनुक्तिरपि तस्याकाशाधिकरणवदधिभूतगतशब्दविषयत्वं वान्तरधिकरणवदधिदेवगतशब्दविषयत्वं वेत्यभिप्रेत्य। न त्वेकाधिकरणत्वमभिप्रेत्य। सूक्तविषयत्वमेव हि ततोऽस्य विशेषः। इदं च मतत्रयं सूत्रयोजनामात्रे भिन्नम्। प्रमेये त्वविरुद्धम्। एवमन्यत्राप्यविरोध ऊह्यः॥

तत्र ज्योतिरधिकरणे सूक्तस्था ज्योतिरादिशब्दा उदाहरणम्। प्राणाधिकरणन्यायागोचरत्वप्रदर्शनेन पूर्वपक्षोत्थानादनन्तरसगतिः॥

अत्र ज्योतिः किमग्निः कि वा विष्णुरिति चिंता । तदर्थं किं ज्योतिश्श्रुतिप्रसिद्ध्यनुसारेण कर्णादिविदूरत्वलिङ्गं बाध्यमुत विपरीतमिति । तदर्थं किं श्रुत्यनुग्राहकं सूक्तं निरवकाशमुत सावकाशमिति ॥

पूर्वपक्षस्तु – युक्तः पूर्वत्र वायुसूक्तस्थस्य प्राणश्रुतिमात्रस्य निरवकाश विष्णुलिङ्गैर्बाधः । अत्र तु ज्योतिश्श्रुतेर्न बाधः । प्रकरणरूपेण सूक्तेनानुगृहीतत्वात् । यद्यपि ज्योतिश्शब्दस्तमोविरोधिमात्रे प्रसिद्धः तथापि हृदयाहितत्व लिङ्गात् 'त्वामग्ने तमसी'त्यग्निशब्दसन्निधानाच्चाग्निपरः । न त्वग्निसूक्तस्थत्वाज्ज्योतिश्शब्दोऽग्निपरः । तथात्वे सूक्तस्याग्निश्रुतिसपादकत्वेन श्रुत्यनुग्राहकत्वायोगात् ॥

एतेन ज्योतिश्शब्दाग्निशब्दौ देवतापरौ चेदन्तरधिकरणन्यायेन ब्रह्मपरौ । भूतपरौ चेदाकाशाधिकरणन्यायेन ब्रह्मपरौ । सावकाशाग्निश्रुतेर्निरवकाशविष्णुलिङ्गैर्बाधात् । न चाग्निश्रुतिः प्रकरणानुगृहीतेति वाच्यम् । तत्तत्सूक्तस्थाग्न्यादिश्रुतीनां विष्णौ सावकाशत्वे सूक्तानामपि तथात्वात् । सर्वसूक्तानां वैष्णवत्वेऽपीदमग्निसूक्तमिदं त्वन्यदितिव्यवस्था तु 'अभिव्यक्तेरित्याश्मरथ्य' इति वक्ष्यमाणन्यायेन युक्ता । एवं च सावकाशसूक्तस्य निरवकाश विष्णुलिङ्गैः सुतरां बाधेन पूर्वपक्षानुदय इति परास्तम् । सावकाशाग्निश्रुत्या सावकाशविष्णुलिङ्गबाधात् ॥

नन्वेवं सावकाशलिङ्गस्य सवकाशश्रुत्यैव बाधसंभवाद्भाष्ये सूक्तोक्ति र्व्यर्था । न च ज्योतिरितिसामान्यश्रुतेरग्निरूपविशेषपर्यवसानार्थं तदुक्तिः । टीकाया 'श्रुतिप्रकरणयो'रिति द्विवचनस्य भाष्ये 'अग्निसूक्तस्थत्वाच्चे'ति चशब्दस्य चायोगात् । सामान्यश्रुतेः 'त्वामग्ने'इति विशेषोपस्थापके शब्दे सति प्रकरणाप्रतीक्षणाच्चेति चेन्न । लिङ्गस्यातिशयेन बाधाय सूक्तोक्तेः । अत एवोक्तं टीकायां 'यावता श्रुतित एव लिङ्गं दुर्बल'मिति । निरवकाशं तु विष्णुलिङ्गं नास्ति । गुहानिहितत्वस्य जाठराग्नावपि संभवात् । निरतिशय वैभवरूपकर्णादिदूरत्वस्य चाग्निश्रुत्यादिबलादग्नावप्युपपत्तेः ॥

सुधायां तु ज्योतिरधिकरणे 'अधिकाशङ्का अग्निसूक्तस्थत्वादिति भाष्य

एव दर्शिते'त्युक्तम् । तत्र च श्रुतिमात्रेण पूर्वपक्षानुदयात्तदुदयार्थमधिकाशङ्कोक्तिरिति नाभिप्रायः । उक्तरीत्या सूक्ताभावेऽपि पूर्वपक्षोदयसंभवात् । किंतु पूर्वपक्षदार्ढ्यार्थं तदुक्तिरित्यभिप्रायः । यद्वा सुधायां प्राणाद्यधिकरणेष्वधिकाशङ्काप्रदर्शकस्थानुव्याख्यानस्य 'नन्वेतदपि पूर्वन्यायेन परिहृतम् । न सूत्रारंभं प्रयोजतीत्यतोऽभ्यधिकाशङ्का दर्शयती'त्यवतारितत्वादिहापि पूर्वपक्षोदयार्थमेव भाष्येऽधिकाशङ्कोक्तिरिति सुधाभिप्रायः ॥

एवं च तत्रेत्थं पूर्वपक्षः । यद्यपि पूर्वाधिकरणन्यायेन निरवकाशब्रह्मलिङ्गैः सावकाशाग्निश्रुतिबाधः । यद्यपि च सर्वसूक्तानां वैष्णवत्वेऽप्यभिव्यक्तेरित्यादिन्यायेनेदमग्निसूक्तमिदं वायुसूक्तमिति व्यवस्था संभवति । तथापीदमग्निसूक्तं न तु विष्णुसूक्तमित्यध्यापकप्रसिद्धेरयोगात्सूक्तं निरवकाशम् । एवं च निरवकाशप्रकरणानुगृहीतश्रुत्या निरवकाशमपि कर्णादिविदूरत्वलिङ्गं बहु वैभवाभिप्रायेण कथंचिदग्नावपि नेयम् । निरवकाशत्वमात्रप्रयुक्तस्य लिङ्गगतस्य प्राबल्यस्य श्रुतिगतान्निरवकाशसूक्तसाहित्यश्रुतित्वोभयप्रयुक्तप्राबल्याद्दुर्बलत्वात् । लिङ्गे बहुत्वप्रयुक्ते प्राबल्ये सत्यपि तस्य श्रुतित्वरूपस्वभावप्रयुक्तप्राबल्याद्दुर्बलत्वात् । अतरधिकरणस्थेन्द्राग्न्यादिश्रुतिस्तु न सूक्तानुगृहीतेति । एवंचात्र टीकायां पूर्वपक्षहेतोः सूक्तस्य सिद्धांतहेतोर्लिङ्गस्य च सावकाशत्वमिति पूर्वःपक्षः । सुधाया तूभयोर्निरवकाशत्वमिति भेदः ॥

यद्वा सुधानुसारेणात्रापि 'सावकाशश्रुतिप्रकरणयो'रितिटीकायां सावकाशत्वं श्रुतेरेव विशेषणं न तु प्रकरणस्य । टीकाया लिङ्गस्य सावकाशत्वोक्तिश्च कर्णादिविदूरत्वस्य निरवकाशत्वेऽपि गुहानिहितत्वस्य सावकाशत्वमभिप्रेत्य वा स्वतो निरवकाशस्यापि सूक्तानुगृहीतश्रुतिविरोधात्कल्प्यावकाशमभिप्रेत्य वा द्रष्टव्या । लिङ्गस्य श्रुतिन एव बाधोक्तिरपि सावकाशलिङ्गाभिप्रायेति ॥

एते च शंके प्रमाणाश्रिते । प्रमेयाश्रिता तु तमोविरोधित्वस्य ज्योतिश्शब्दप्रवृत्तिनिमित्तस्य सर्वगतत्वेन तमसा सह स्थिते ब्रह्मण्ययोग इति । तत्र यद्यपि वैश्वानरो जायमान इत्यग्निसूक्ते वैश्वानरश्रुतिर्जायमानत्व-

लिङ्गं चास्ति तथापि विष्णौ श्रुतेः सावकाशताया वैश्वानराधिकरणे लिङ्गस्य सावकाशतायाश्च द्युभ्वाद्यधिकरणे कंठोक्तत्वान्न ताभ्यां पूर्वपक्षितं भाष्य-टीकयोः ॥

**सिद्धांतस्तु—**

कर्णादीनां विदूरत्वं विष्णोरन्यत्र नैव हि ।
अग्नेस्तु श्रुतिसूक्तादि सावकाशं परात्मनि ॥ १ ॥

कर्णादिविदूरत्वं हि यदितिपरिच्छेदानर्हवैभवत्वम् । न तु सर्वथा कर्णादिविदूरत्वम् । काप्यसंभवात् । तच्च परो मात्रयेत्यादिभाष्योक्तश्रुतिभि र्निरवकाशम् । न हि 'अग्निर्वै देवानामवम'इत्यवमतया 'भीषाऽस्मादग्नि स्तपती'तिसभयतया 'परि ह्येनं म्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्नि' रिति मरणादिमत्तया च श्रुतस्याग्नेरपरिच्छेद्यं वैभवम् । अग्निश्रुत्यादि तु 'अग्निनाग्निः समिध्यते तद्देवा ज्योतिषा ज्योतिः नारायणपरो ज्योतिः विष्णुरेव ज्योतिः अहमग्निरहं हुतम् । ज्योतिषामपि तज्ज्योति'रित्यादि श्रुतिभिर्विष्णौ सावकाशम् ॥

इदं न विष्णुसूक्तमित्यध्यापकप्रसिद्धिस्तु 'धान्यमसी'ति मन्त्रस्य मास हविष्कयागे निविष्टस्य मासमसीत्यूहे कर्तव्ये मृगोऽसीत्यूहवत् प्रसिद्धविष्ण्वादि शब्दाभावादज्ञानमूला । तदुक्तं न्यायविवरणे 'संदिग्धश्रुतिलिङ्गाभ्यामप्य संदिग्धयोः केवलयोरेव बलवत्वा'दिति ॥

अत्र च संदिग्धत्वं नाम सावकाशत्वम् । एवं सूक्तांतरेष्वपि द्रष्टव्यम् । तथा हि । ऐन्द्रे 'न त्वावां इन्द्र कश्चन न जातो न जनिष्यत' इति । तथा 'ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष' इति । तथा 'समुद्रे अंतश्शयत' इति । तथा बार्हस्पत्ये 'विश्वेषामिज्जनिता ब्रह्मणा-मसी'ति । तथा सौरे 'सूर्य आत्मा जगतस्तस्थुष' इति । तथा वारुणे यो विश्वस्य जगतो देव ईश इति । तथा विश्वकर्मसूक्ते 'विश्वतश्चक्षुः यो नः पिता जनिते'त्यादीनि ब्रह्मलिङ्गानि संति । किंच सौरे 'येनापा वक चक्षसा भुरण्यं तं जनाँ अनु । त्वं वरुण पश्यसी'ति सूर्यस्य पावक

वरुणादिशब्दैस्संबोधनम् । तथा वरुणे 'अथावयमादित्ये'ति वरुणस्यादित्यादिशब्दैः संबोधनम् । तथाऽऽग्नेये 'त्वमग्न इंद्रो वृषभं सतामसि त्वं विष्णुरुरुगायो नमस्य' इत्यग्निं सबोध्य तत्रेन्द्रविष्ण्वादिशब्दप्रयोगः तत्तत्सूक्तानां सर्वशब्दवाच्यब्रह्मपरत्वे युक्तः[क्तं] । नान्यथा । यदि चेन्द्रादावेव ब्रह्मलिङ्गोक्तिः स्तुत्यर्था तर्ह्याकाशप्राणादावपि ब्रह्मलिङ्गोक्तिस्तदर्था स्यादिति दिक् ॥

न चैवमत्रत्यसिद्धान्तेनैवान्तरधिकरणादिपूर्वपक्षाणा कैमुत्यन्यायहतत्वात्तत्रत्यसिद्धान्तन्यायव्युत्पादनं व्यर्थम् । स्वतो बलवतोऽपि सावकाशस्य स्वतो दुर्बलेनापि निरवकाशेन बाध इत्यन्तरधिकरणन्यायेन विनाऽत्रत्यसिद्धान्तस्यैवासिद्धेः । अत्र अकाशाद्यधिकरणेषु च अधिकाशङ्कानिरासकन्याय एव हि व्युत्पाद्यः । न त्वन्तरधिकरणन्यायः । 'ज्योतिर्दर्शना'दित्यत्र त्वग्निसूक्तस्थस्यापि ज्योतिषो भ्रियमाणत्वादिलिंगैर्जीवत्वे शङ्किते लिङ्गानि ब्रह्मपरोपक्रमोपसंहारमध्यस्थत्वादन्तर्भावितण्यन्तानीति वक्ष्यत इति न तेनाप्यस्य पुनरुक्तिः । ज्योतिश्शब्दप्रवृत्तिनिमित्तं च प्रकाशत्वं चित्प्रकाशरूपे ब्रह्मण्यप्यस्ति ॥

यद्यप्यत्र वाक्यशेषे 'विश्वे देवा अनमस्यन्भियाना' इति सर्वदेवोपास्यत्वादिकमपि निरवकाशविष्णुलिङ्गमस्ति । तथापि कर्णादिविदूरत्ववद्विषयवाक्य एवाश्रुतत्वादपरिच्छेद्यवैभवान्तर्भूतत्वाच्च न सूत्रकारादिभिः पृथगुक्तम् ॥

यद्यप्यत्र ज्योतिः प्रति कर्णादीना विरुद्धचरगरूपं कर्णादिविदूरत्वं वक्तुं विचरणाभिधानादिति सूत्रयितव्यम् । तथाप्युपसर्गस्य द्योतकत्वमात्रं धातोरेव तु विचरणाभिधायकत्वमिति प्रदर्शनार्थं सूत्रस्य श्रुत्यनुगमप्रदर्शनार्थं च चरणाभिधानादित्युक्तम् । विचरणाभिधानादित्युक्तौ हि श्रुतौ वीत्यनेन चरतीत्यस्य मे मन इति पदद्वयवहितत्वात् श्रुत्यनुगमो न ज्ञायेत । तस्माद्विष्णुरेवेदं ज्योतिरिति ॥ टीकाक्षरार्थस्तु स्पष्टः ॥

॥ इति ज्योतिरधिकरणम् ॥

[ गायत्र्यधिकरणम् ]

**11 – ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पण निगदात्तथा हि दर्शनम् ॐ ॥ १-१-११ ॥**

अत्राधिवेदगायत्र्यादिशब्दा उदाहरणम्। अत्र विषयवाक्यं 'अथ यदतः परो दिवो ज्योति'रिति छान्दोग्यस्थं ज्योतिर्वाक्यमित्येकं मतम्। मतान्तरं तु 'गायत्री वा इदं सर्व'मिति। अत्राद्यं मतं 'अथ यदतः परो दिव इति वाक्योक्ते ज्योतिषि सन्देहः। किं ब्रह्मोतान्य'दिति सुधोक्तम्। द्वितीयं त्वत्र टीकायां सुधायां चोक्तम् ॥

अत्राद्ये मते ज्योतिरधिकरणेऽग्निसूक्तस्य ज्योतिषोऽग्नित्वनिरासः अत्र तु छादोग्यस्थस्य ज्योतिषश्छन्दस्त्वनिरासः। द्वितीये तु ज्योतिरधिकरणेऽग्निसूक्तस्थस्य ज्योतिषोऽग्नित्वनिरासः॥ अत्र तु छान्दोग्यस्थाया गायत्र्याश्छन्दस्त्वनिरास इति भेदः ॥

आद्ये भाष्ये गायत्रीवाक्योपादानं गायत्रीशब्दरूपपूर्वपक्षबीजप्रदर्शनार्थम्। द्वितीये भाष्ये ज्योतिर्वाक्योपादानं पूर्वपक्षे ज्योतिरधिकरणाक्षेपप्रदर्शनार्थम्। आद्येऽपि छान्दोग्यस्थज्योतिषो गायत्री वेत्युपक्रमेण गायत्रीत्वादग्निसूक्तस्थमपि गायत्रीत्येकः पूर्वःपक्ष.। अपरस्तु अस्त्वग्निसूक्तस्थं ज्योतिः कर्णादिविदूरत्वाद्विष्णुः। छान्दोग्यस्थं तु 'तदेतद्दृष्टं च श्रुत चे'ति तद्विरुद्धदृष्टश्रुतत्वादिश्रवणान्न विष्णुरिति ॥

न चैवं सति पूर्वपक्षे पूर्वसिद्धान्तानाक्षेपादफलेयं चिन्ता। ज्योतिषो गायत्रीत्वे 'इयं वा व सा येयं पृथिवी'ति गायत्र्यभिन्नत्वेनोक्ताया पृथिव्या 'अस्यां हीदं सर्वं प्रतिष्ठित'मित्युक्तस्य स्थितिहेतुत्वादेरपि तद्धर्मत्वापत्त्या जन्मादिसूत्राक्षेपात्। 'योऽयमन्तर्हृदय' इति छान्दोग्यस्थे ज्योतिष्यानन्दमयधर्मभूतहृदयनिहितत्वश्रवणेन ज्योतिरधिकरणमनाक्षिप्यैवानन्दमयाधिकरणाक्षेपाच्च। द्वितीयेऽपि गायत्र्याश्छन्दस्त्वे तामुपक्रम्य छान्दोग्य उक्तस्य ज्योतिषोऽपि छन्दस्त्वादग्निसूक्तस्थमपि छन्द इत्येकः पूर्वः पक्षः ॥

अन्यस्तूक्तरीत्याऽग्निसूक्तस्थस्य विष्णुत्वेऽपि छांदोग्यस्थं छन्द एवेति ॥

अपरस्तु छांदोग्यस्थस्यापि ज्योतिषो ज्योतिरधिकरणे विष्णौ निर्णीत ज्योतिश्श्रुत्या विष्णुत्वेऽपि गायत्री न विष्णुः तत्र तच्छ्रुतेरभावादिति । अत्रापि द्वितीये प्रथमोऽत्र टीकायामुक्तः । आद्ये प्रथमद्वितीयौ (प्रथम-द्वितीययोराद्योऽत्र टीकायामुक्तः । प्रथमे द्वितीयः) । द्वितीये द्वितीयतृतीयौ च सुधायाम् । अ(त)त्र मतद्वयेऽप्याद्ये पूर्वपक्षे पूर्वसिद्धाताक्षेपादाक्षेपिक्य-वातरसंगतिः स्फुटा । अद्ये द्वितीये द्वितीये द्वितीयतृतीययोस्तु पूर्वपक्षयोः पूर्वाधिकरणवैषम्यप्रदर्शनाय तदुपजीवित्वादवातरसंगतिः ॥

अत्र गायत्री किं छन्दः किं वा विष्णुरिति चिन्ता । तदर्थं किं गायत्रींश्रुतिप्रसिद्ध्यनुसारेण भूतपादत्वादि विष्णुलिङ्गं बाध्यं किं वा विपरीत-मिति । तदर्थं प्रसिद्धिबाधे किं श्रुतेर्मुख्यत्वभङ्ग उत नेति । तदर्थं गायत्रीशब्दप्रवृत्तिनिमित्तं ब्रह्मणि नास्त्युतास्तीति । तदर्थं किमनादिस्वभाव ईशानधीन उत तदधीन इति । तथा ब्रह्मपक्षे दिवि दिव इत्युपदेशभेदः कि न युक्त उत युक्त इति ॥

यद्यपि पूर्वत्र निरवकाशलिङ्गैः सावकाशज्योतिश्श्रुतिबाध उक्तोऽत्र 'यद्वै तद्ब्रह्मे'त्यादिश्रुत्यनुगृहीतैर्भूतपादत्वादिनिरवकाशलिङ्गैः सुतरां सावकाश-गायत्र्यादिश्रुतिबाध इति पूर्वपक्षानुदयः । तथाप्यधिकाशङ्कया तदुदयः ॥

शङ्का तु विष्णौ प्रसिद्धेषु शब्देषु सत्स्वन्यत्र प्रसिद्धगायत्र्यादिशब्द प्रयोगे प्रयोजनं नेत्येका । इयं च 'चेतोऽर्पणनिगदा'दितिसूत्र सिद्धान्ते प्रयोजनोक्त्या सूचिता । आकाशादिशब्दसाधारणी चेयम् । गायत्रीशब्दे ऽनुपपत्त्यन्तरसद्भावात्स उदाहृता । अत एवाग्निगायत्र्यादीति भाष्य आदिपद प्रयोगो युक्तः । 'अधिकरणान्तरेऽप्येतन्न्यायस्यानुसंधेयत्वं च सूचयती'ति टीका चोपपन्ना । आसाधारणी त्वन्या । युक्तमग्निसूक्तस्थज्योतिषो विष्णुत्वम् । उपदेशभेदाभावात् । इह तु दिव इति पञ्चम्युपदेशस्थस्य ज्योतिश्श्रुत्या विष्णु त्वेऽपि दिवीति तद्विरुद्धसप्तम्युपदेशस्थगायत्र्या न विष्णुत्वमिति ॥

अपरा तु अग्निसूक्तस्थज्योतिर्निष्ठकर्णादिविदूरत्वविरुद्धदृष्टश्रुतत्वाद्युप

देशान्नेदं ज्योतिर्विष्णुः। ततश्च गायत्र्यपि न विष्णुरिति। इदं च शङ्काद्वयं 'उपदेशभेदा'दिति सूत्रे कण्ठोक्तम्॥

अपरा तु एकस्य वह्निश्रुतेरन्यत्र प्रसिद्धिबाधेऽपि गायत्रीवाक्पृथिव्याद्यनेकशब्दानामन्यत्र प्रसिद्धिबाधो न युक्तः। अन्तरधिकरण इन्द्रादिबहुश्रुतीनामन्यत्रप्रसिद्धिबाधस्त्वन्यत्र प्रसिद्धान्तःस्थत्वमुखेन युक्तः। न चेह तथा मुखमस्तीति। इदं च 'कथं प्रसिद्धबहुलशब्दानामन्यथार्थते'त्यनुव्याख्यान उक्ता। एताश्च प्रमाणाश्रिताः॥

प्रमेयाश्रिता तु युक्तमाकाशाद्यधिकरणोक्तं जन्यभूताकाशस्वभावस्य विवरत्वादेर्ज्योतिश्शब्दप्रवृत्तिनिमित्तस्य चेशाधीनत्वम्। धर्मिणा सह जन्यत्वात्। गायत्रीरूपवेदस्य त्वनादित्वात्तत्स्वभावस्य गानत्राणकर्तृत्वादिरूप्रवृत्तिनिमित्तस्य नेशाधीनत्वमिति॥

ननु कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नानादित्वम्। उक्तं हि **विष्णुतत्वनिर्णयटीकायां** 'न हि वयं वेदस्य कूटस्थनित्यता ब्रूम'इति। 'क्रमस्य' कृतकत्वेऽपी'ति चेति चेन्नैवम्। **तत्वसंख्यानटीकायां** 'नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वम। तच्च वेदानां 'नित्या वेदास्समस्ताश्चेत्यादिप्रमाणसिद्ध' मित्युक्तत्वात्। युक्तं चैतत्। क्रमस्य सदेश्वरबुद्धिस्थत्वात्। अत एवोक्तं विष्णुतत्वनिर्णये। सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वादिति। तट्टीकायां कौटस्थ्यनिषेधस्त्वस्मदादीन्प्रति प्रमापकत्वोपयुक्तस्यास्मदादिबुद्धिस्थस्य क्रमस्योच्चारणाद्यधीनत्वेन कृतकत्वात्। कृत्वा चिन्तया वाऽनादित्वोक्तिः क्रमस्यानन्याधीनत्वात्। इयं च —

'नित्यत्वादेव शब्दाना तत्स्वभावः कथं हरेः'

इत्यनुव्याख्याने दर्शिता। तत्राद्या शङ्का 'चेतोऽर्पणनिगदा'दिति सूत्रे प्रयोजनोक्त्या परिहृता। द्वितीयतृतीये तु 'उभयस्मिन्नप्यविरोधा'दित्यनेन परिहृते। तस्य यथा विवक्षाभेदेन सप्तमीपञ्चम्यौ न विरुद्धे इत्यर्थः, तथाऽऽकारभेदेन कर्णादिविदूत्वदृष्टत्वादिके न विरुद्धे इत्यप्यर्थोपपत्तेः। चतुर्थी तु 'बाहुल्याच्च श्रुतिलिङ्गयो'रित्यनुव्याख्याने 'ज्यायांश्च पुरुष इत्यादिशब्द

सहितलिंगश्चे'त्यादिन्यायविवरणे च परिहृता ॥

अयं भावः । अतो ज्यायांश्च पुरुषः यद्वै तद्ब्रह्म एतामेव ब्रह्मोपनिषद मित्यादिश्रुतीनां गानत्राणकर्तृत्वं भूतादिपादत्वं एतामेव नातिशीयन्त इति सर्वोत्तमत्वमित्यादिलिंगाना च बाहुल्यादनेकेषामपि शब्दानां प्रसिद्धार्थत्यागः । पुरुषशब्दो हि 'स वा अयं पुरुषः सर्वासु पुरि शयो नैनेन किं च नानावृत' मित्यत्र सर्वान्तर्यामित्वं पुरुषत्वनिरुक्तेः तथा 'पुरुषो ह वै नारायणः सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येष ह्येवाचिन्त्यः परः परमो हरिः पुरुषः परः परमात्माऽजो ब्रह्म नारायणः प्रभु'रित्यादिश्रुतेः,

'यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते' ।

इत्यादिस्मृतेश्च पुरुषोत्तमे मुख्य इति ॥

पञ्चमी तु 'तादृशत्वात्तु तच्छक्ते'रित्यनुव्याख्याने परिहृता । अयं भावः —

अनादीनां गुणादीनां यथा गुण्यादितन्त्रता ।
तथाऽऽनादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रता ॥ १ ॥

यथा वैशेषिकमते गगनादिपरिमाणादीनामनादीनामपि स्वाश्रयगगनाद्यधीनता ॥ यथा चाद्वैतिमतेऽनादेरात्माज्ञानसंबन्धस्य जीवब्रह्मविभागादेश्च संबन्ध्यज्ञानाद्यधीनता । यथा वा प्राभाकरमते दुःखप्रागभावस्य मोक्षस्य ज्ञानाधीनता यथा वा मतान्तरे दुरितप्रागभावस्य निषिद्धाकरणाधीनता । तथा गाढव्याप्त्यादिपदप्रवृत्तिनिमित्तस्य चोदनायभावेऽपि स्थितौ विष्णवधीनता ॥

किंच सादेरप्युत्पत्तावन्यापेक्षायामपि तदनन्तरं स्थितावनादितो न विशेषः । तत्र च सादिनि केवलमुत्पत्तावीशतन्त्रः किं तु स्थितावपीति 'प्रकृतैतावत्त्वं हि प्रतिषेधती'त्यत्र वक्ष्यमाणत्वादनादेरुत्पत्त्यभावेन तत्रान्यानपेक्षायामपि स्थितावीशापेक्षा किं न स्यात् । दृश्यते हि योगेऽन्यापेक्षस्य पराधीनस्यत्र क्षेमेऽपि तदपेक्षस्य तदधीनता । किंच

अकर्तुमन्यथाकर्तुं कर्तुं चास्तीश्वरस्य यत् ।

सामर्थ्यं तेन तत्तन्त्रमनाद्यपि च सादिवत् ॥ १ ॥

ईश्वरो हि सर्वत्राप्रतिहतशक्तित्वाद्धटेनेवाव्याकृताकाशादिनापि रहितम तीतादिकालं कर्तुं शक्नोति । सङ्कल्पाभावात्तु तदकरणम् । तदभावश्च कार्यो न्नेयः । न च शक्त्यभावादेव तदुपपत्तिः । 'स्वभावजीवकर्माणि' इत्यादि टीकोदाहृतश्रुत्यादिविरोधादैश्वर्यविरोधाच्च । तथा चानादीशेच्छाधीनानादिस्वभा वता कथमीशतन्त्रताविरोधिनी । स्वभावमात्रस्येशाधीनताऽऽकाशाधिकरण उक्ता । अत्र स्वानादेरपीति भेदः । पाकाधीनविशेषावाप्तिलक्षणोत्पत्ति रीशादन्यस्य सर्वस्यापीति वियत्पादे वक्ष्यते ॥ अत्र तु प्रागसतस्सत्ता संबन्ध रूपोत्पत्तिरहितानामपि स्वरूपसत्तेशाधीनेत्युक्तमित्यविरोधः ॥

यद्यप्यनादिस्वभावस्येशाधीनतामनुक्त्वाऽपि गायत्रीशब्दप्रवृत्तिनिमित्तस्य गानत्राणकर्तृत्वस्य वेदोपदेष्टरि रक्षके च विष्णावेव संभवेन तस्य विष्णुपरता वक्तुं शक्या । न च योगाद्रूढेः प्राबल्याद्रूढिबाधकमहायोगायेशाधीनत्वोक्तिः । गायति च त्रायति चेति श्रुत्युक्तान्निरवकाशविष्णुलिङ्गानुग्रहाच्च रूढित्यागेन योगस्यैव ग्राह्यत्वात् । भाष्ये विष्णौ पौराणिकरूढेरुक्तत्वाच्च । तथापि यथा व्रीही नवहन्तीत्यत्र द्वितीयाश्रुतिमतन्त्रीकृत्यावघातादेर्लिङ्गाद्व्रीहिशेषतोक्ता द्वितीये । तथात्रापि तद्गतत्वमतन्त्रीकृत्य छन्दोगतस्य प्रवृत्तिनिमित्तस्य विष्णवधीनत्वेन श्रुतेर्विष्णावेव महायोगेन परममुख्यत्वमिति प्रदर्शनार्थं अनादिस्वभावनियाम कशक्तिरूपमहागुणसिद्ध्यर्थं विष्णावसंभवदनादिप्रवृत्तिनिमित्तकशब्दसमन्वयार्थं चेशाधीनतोक्ता । तस्माद्विष्णुरेवाधिवेदगतगायत्र्यादिशब्दवाच्य इति ॥

सूत्रक्रमस्तु आद्ये उपक्रमस्थहेतूक्तिः । द्वितीये तूपसंहारोदाहृतमन्त्रस्थ हेतूक्तिः । तृतीये चावकोद्धार इति ॥

अत्रोभाभ्यामुक्तं चतुस्सूत्र्येकमधिकरणम् । चरणभिधानादित्यस्य च पादाभिधानादित्यर्थः । पादाभिधानं च 'अथ यदत' इति छान्दोग्यगत मेव । तत्र 'तदेतदृचाभ्युक्तम् । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी' तिपादाभिधानादिति । तत्र लाघवार्थं श्रुत्यनुगमार्थं च पादाभिधानादिति सूत्रं स्यादिति सुधायामेवोक्तम् । किं चास्मद्रीत्या 'हृदय आहितं य'दिति गुहा

निहितत्वयुक्तज्योतिर्वाक्योदाहरणेनानन्दमयाधिकरणाक्षेपेण पूर्वपक्षसंभवे तदनाक्षेपेण 'अथ यदत' इति वाक्योदाहरणमयुक्तम् । किंच—

पौनरुक्त्यं परमते ज्योतिर्भूतादिसूत्रयोः ।
पादोद्देशादन्या हि नैवास्ति चरणाभिधा ॥ १ ॥

पादोऽस्य सर्वा भूतानीति पूर्ववाक्यस्थपादाभिधानादन्यस्य ज्योतिर्वाक्ये पादाभिधानस्याभावात्तस्य च भूतादिसूत्रेणैवोक्तत्वाच्चरणाभिधानादित्यस्य पौनरुक्त्यम् । अथ 'चरणाभिधाना'दित्यनेन 'पादोऽस्य सर्वा भूतानी'ति मन्त्रवाक्यस्थं सर्वभूतानामेकपादत्वममृतस्य त्रिपात्त्वं चोच्यते । 'भूतादिपादे'त्यनेन तु 'सैषा चतुष्पदे'ति ब्राह्मणवाक्यस्थं भूतपृथिवीशरीरहृदयानां पादत्वमुच्यते । ब्राह्मणवाक्ये हि 'इदं सर्वं भूत'मिति भूतं 'येयं पृथिवी'ति पृथिवीं 'यदिदमस्मिन्पुरुषे शरीर'मिति शरीरं 'यदिदमस्मिन्नन्तः पुरुषे हृदय'मिति हृदयं चोक्त्वा 'सैषा चतुष्पदा षड्विधा गायत्री'ति भूतादीनां चतुर्णां पादत्वं व्यपदिश्यते । ततो न पौनरुक्त्यमिति चेन्न । 'चरणाभिधाना'दित्यनेन 'पादोऽस्य सर्वा भूतानि त्रिपादस्ये'ति मन्त्रस्थपादाभिधानद्वयस्येव ततोऽधिकार्थस्य ब्राह्मणस्थपादाभिधानस्यापि वक्तुं शक्यत्वेन भूतादिसूत्रवैयर्थ्यात् ॥

अपि च त्वत्पक्षे हि ब्रह्मणस्तत्तत्पादत्वं तत्तदात्मकत्वम् । तथा च सर्वात्मकत्वं चरणाभिधानादित्यनेनैवोक्तमिति किं तदेकदेशभूतभूताद्यात्मकत्वप्रतिपादकेन भूतादिसूत्रेण । किं च चतुष्पदेत्यत्र चतुश्शब्दो न भूतादिपरः । पूर्ववाक्ये भूतादिवत् 'वाग्वै गायत्री वाग्वा इदं सर्व'मिति वाचः 'अस्मिन्हीमे प्राणाः प्रतिष्ठिता' इति प्राणानां चोक्त्या भूतादीनां षट्त्वेन चतुष्ट्वायोगात् । अत एव श्रुतौ षड्विधेत्युक्तम् ॥

न च वाच्यं भूतादीनां वाक्प्राणरहितानां चतुर्णां पादत्वं तत्सहितानां तु षण्णां विधात्वमिति । पादशब्देन तदात्मकत्वविवक्षायां वाक्प्राणयोरपि तदात्मकत्वाद्विधाषट्कान्तर्गतस्य भूतादिचतुष्टयस्य पृथक्कृत्य पादत्वोक्तेर्निष्फलत्वात् । उपासनार्थं ब्रह्मणि भूतादीनां चरणत्वारोपश्चेद्गायत्र्याख्यच्छन्दस्येव स स्यादिति गायत्री ब्रह्मेति सिद्धान्तासिद्धिः ॥

तस्मात्सैषेत्यत्र न पूर्ववाक्यस्थाना भूतादीनां पादत्वमुच्यते । किं तु षाड्विध्यमनूद्य चतुष्पदत्वं विधाय तद्विवरणाय पादोऽस्येत्यादि ऋगुदाहृता । अन्यथा मन्त्रब्राह्मणयोर्भिन्नार्थत्वाद्ब्राह्मणोक्ते 'तदेतदृचाभ्युक्त'मितिमन्त्रसंमतिर्न स्यात् । 'त्रिपादस्यामृतं दिवि पादोऽस्ये'ति पादशब्दनिर्दिष्टे चतुष्टये सति तदनिर्दिष्टस्य भूतपृथिव्यादेः पादचतुष्टयत्वायोगाच्च । दिवि दिव इति विरुद्धविभक्तिसहितद्युप्रातिपदिकार्थसंबद्धस्यैक्यम् तद्रहितचतुस्संख्यासंबद्धानां तु मन्त्रब्राह्मणस्थपादानां भेद इत्यस्यात्यन्तायुक्तत्वाच्च । अस्माकं मते षाड्विध्यं तु 'गायत्र्यां संस्थितो विष्णु'रित्यादिछान्दोग्यभाष्याज्ज्ञेयम् । तस्मान्मान्त्रवर्णिकादन्यस्य पादाभिधानस्याभावात्तस्य च चरणाभिधानादित्यनेनैवोक्तत्वात्परमते भूतादिसूत्रवैयर्थ्यम् ॥

अस्माकं पक्षे भूतादीत्यत्रादिशब्दस्तु 'अमृतं दिवी'त्युक्तामृताख्यस्वरूपपरः । न चात्र पादमुद्दिश्य विश्वभूतविधिः । येन पादैकत्वमुद्देश्यविशेषणत्वात् 'ग्रहं संमार्ष्टी'त्यत्र ग्रहगतैकत्ववदविवक्षितमिति चतुष्पदत्वं न सिद्ध्येत् । किं तु विश्वभूतोद्देशेन पादविधिः । पादानामेव जिज्ञासितत्वात् अत एव टीकायां 'सर्वाणि भूतान्यस्यैकः पाद' इति पादविधानं दर्शितम् । तथा च पशुना यजेतेत्यत्र पश्वेकत्ववद्विधेयगतत्वात्पादैकत्वं विवक्षितम् । यथा च 'पौर्णमास्यां पौर्णमास्या यजेते'त्यादौ सप्तम्यन्तः पौर्णमास्यादिशब्दः काले मुख्यः तृतीयांतस्त तत्संबन्धिनि कर्मण्यमुख्यः । तथा 'त्रिपा' दित्यत्र पादशब्दः स्वरूपांशे मुख्य· 'पादोऽस्ये'त्यत्र भिन्नांशे त्वमुख्य इति न कश्चिद्दोषः ॥

यच्च 'उभयस्मिन्नप्यविरोधा'दित्यस्य परकीयं व्याख्यानं 'यथा वृक्षाग्रासंबद्धोऽपि श्येनो वृक्षाग्रे श्येनो वृक्षाग्रात्परत्र श्येन इति च व्यपदिश्यते । तथा दिव्ये वसद्ब्रह्म दिवः परमित्यप्युच्यते । यथा वा वृक्षाग्रेणासंबद्धोऽपि श्येनो वृक्षाग्रात्परत्र श्येनो वृक्षाग्रे श्येन इति चोच्यते । एवं दिवः परमपि ब्रह्म दिवीत्यप्युच्यत' इति । तदपि न । यस्य वृक्षाग्रस्य यं प्रति मुख्यमाधारत्वमवधित्वं वा तस्यैव तं प्रत्येवामुख्यस्यावधित्वस्य वाऽऽधारत्वस्य वा विवक्षायां वृक्षाग्रात्परत्र

श्येन इत्यादिप्रयोगाभावेन दृष्टांतासिद्धेः ॥

अत्र भामत्यामुक्तम् । यदाऽऽधारत्वं मुख्यं तदा वृक्षाग्रादित्यत्र श्येन शब्दो वृक्षाग्रलग्नश्येनावयवादुपरितनश्येनावयवावच्छिन्नश्येनावयविलक्षकः । अग्रशब्दो वाऽऽग्रादर्वाग्भागलक्षकः । यदा त्ववधित्वं मुख्यं तदाग्र इत्यत्र सप्तमी सामीप्यं लक्षयति । एवं दार्ष्टान्तिकेऽपि ज्योतिश्शब्दो वा दिव इत्यत्र द्युप्रातिपदिकं वा दिवीत्यत्र सप्तमी वा लाक्षणिकीति । तन्न । ज्योतिषो ब्रह्मणो निरवयवत्वात् । लक्षणादिप्रसङ्गात् । 'पृथिव्यां द्यौर्महामेरु' रित्यादिस्मृतिविरोधाच्च ॥

केचित्तु सप्तमी अन्तर्बहिरधरोर्ध्वभागस्थितिसाधारणी । प्रासादस्यान्तरधरभागस्थित इव बहिरूर्ध्वभागावस्थितेऽपि वस्तुनि प्रासादे वर्तत इति प्रयोगात् । पञ्चमी तूपरिस्थित्यसाधारणी । अत उभाभ्यां स्थानविशेषादुपरिस्थितिरेव विवक्षितेत्युभे अपि मुख्यार्थे एवेत्याहुः। तन्न । उभयत्रापि द्युशब्दस्यैकार्थत्वे द्वयोरपि मुख्यार्थत्वायोगात् । सप्तमी ह्याधारत्वे । परं तु तदाधारत्वमधरान्तर्भागाभ्यामिवोर्ध्वबहिर्भागाभ्यामप्यवच्छिद्यते । न त्ववयविनोऽवधित्वे सप्तमी । न हि वृक्षात्परतो भ्रमन् श्येनो वृक्षेऽस्तीत्युच्यते । पञ्चमी त्ववधित्व एव । न त्वाधारत्वे । न ह्यूर्ध्वभागावच्छिन्नेऽपि वृक्षे वसन् वृक्षात्परत इत्युच्यते । किंतु वृक्षस्योर्ध्वभाग इति । तस्मात् 'त्रिसप्तलोकापेक्षये'ति भाष्योक्त एव परिहारः साधुः ॥

भाष्ये ह्येवमभिप्रेतम् । यदा भूर्भुवस्स्वरिति लोकत्रयविवक्षा तदा लक्षयोजनोच्छ्रितान्तरिक्षलोकादुपरितनस्य सर्वस्यापि द्युत्वाच्छ्वेतद्वीपानन्तासनवैकुण्ठानां चान्तरिक्षादुपरितनत्वादत्रयं नारायणवासुदेववैकुण्ठाख्यं त्रिपात्संज्ञं रूपत्रयं दिवीत्युच्यते । न च —

'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः'

इत्युक्तत्वादनन्तासनस्य नांतरिक्षादुपरितनतेति शंक्यम् । तस्य पृथिवीस्थत्वेऽपि बहुलक्षयोजनोच्छ्रितत्वेनैकलक्षयोजनोच्छ्रितान्तरिक्षादुपरितनत्वोपपत्तेः । सर्वपृथिवीस्थोच्चत्वोक्त्या तु नान्ययोर्मो व्यावर्त्यते । किं त्वयोगः ।

यदा तु भूर्भुवस्स्वर्महर्जनस्तपस्सत्यमिति सप्तलोकविवक्षा। तदेन्द्रसदनस्य द्युत्वात्तत्परस्य वैकुण्ठस्य दिवः परत्वम्॥

'पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम्।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परे'

इति स्मृतेर्मेरोरपि द्युत्वात्तत्परस्यानन्तासनस्यापि दिवः परता। सूर्यमंडलस्यापि द्युत्वात्तत्परस्य श्वेतद्वीपस्यापि दिवः परत्वम्॥

अत्र यद्यपि लोकत्रयविवक्षायामप्यनन्तासनादीनां मेर्वादिपरत्वेन दिवः परत्वसिद्धिः। स्वर्गलोकात्परत्वं त्वनन्तासनश्वेतद्वीपयोर्नास्ति॥

'यावानुच्चः स्वर्गलोकस्तावानुच्चतया स च।
श्वेतद्वीपो दिविष्ठोऽत'

इत्यादेः। तथापि वैकुण्ठस्य सर्वद्युपरत्वसिद्धये सप्तलोकविवक्षोक्तिः। तदुक्तं—

'द्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यत'

इति। एवं च यथा चैत्रो ग्रामेऽस्तीत्युक्त्वा स ग्रामाद्बहिरित्युक्ते आद्ये प्रयोगे ग्रामशब्दो अरण्यादिसहिते वर्तते। द्वितीये तु वाटपरिक्षेपे। तदुक्तं महाभाष्ये। 'ग्रामशब्दोऽयं बह्वर्थः अस्ति वाटपरिक्षेपे वर्तते। तद्यथा ग्रामं प्रविष्ट इति। अस्ति सारण्यके ससंस्थंडिलके वर्तते। तद्यथा ग्रामो दग्ध' इतीति। तथा प्रकृतेऽपि द्युशब्दोऽनेकार्थः॥

अनेकार्थत्वं चाक्षादिशब्दवद्वृद्धव्यवहारादिना सर्वत्र मुख्यत्वेन वैकत्र मुख्यत्वेऽप्यन्यत्रामुख्यत्वेन वेति। 'अन्याय्यं चानेकार्थत्व'मितिन्यायस्य नायं विषयः। सर्वतः पृष्ठत्वं चानन्तासनादीनां यथासंभवं पृथिव्यादिलोकोच्चत्वम्। विश्वतः पृष्ठत्वं च मेरुवैजयंतसत्यलोकरूपचतुर्मुखस्थानादुच्चत्वमिति टीकायामेवोक्तम्। इदं च—

'पृथिव्यां ब्रह्मणो मेरुर्जयन्तं त्वन्तरिक्षगम्।
तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम्॥
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः परः'

इत्यादिवाक्यादवगन्तव्यम् । अत्र यद्यपि वैकुण्ठस्य स्वर्गलोकात्परत्वेनैव दिवः परत्वसिद्धिः । तथापि तस्य सर्वतः पृष्ठेष्वित्यनेनैवोक्तत्वाद्दिवः पर इत्यस्य वैयर्थ्यं मा भूदितीन्द्रसदनस्य द्युत्वोक्तिः ॥

यद्वाऽचित्प्रकृत्यात्मकत्वेन द्योतमाने स्थानत्रये सप्तम्यन्तो द्युशब्दो यौगिकः । पञ्चम्यन्तस्तु स्वर्गादौ रूढ इत्यविरोधः । अयमपि सूत्राविरोधशब्दार्थ इति द्रष्टव्यम् । अयं च परिहारः—

'बहुलक्षोच्छ्रिते नित्ये विमाने संस्थितं यतः ।
चित्प्रकृत्यात्मनि ततो दिवीति कथितं श्रुता'

वितिछान्दोग्यभाष्ये सूचितः ॥

यच्चोक्तं परैर्जागरिते हि जीवस्य शरीरबाह्याकाशः स्थानम् । स्वप्ने तु तन्मध्याकाशः । सुप्तौ तु हृदयाकाशः । तथा चावस्थात्रयविशिष्टो जीवः त्रिपात् । उक्तत्रिविधाकाशं च द्युशब्दार्थ इति । तन्न । जाग्रदाद्यवस्थावतो विश्वादिशब्दवाच्यस्य,

'दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः'

इत्यादि श्रुत्या स्थानान्तरोक्तेः । जागरादौ जीवस्य बाह्यादिपदार्थभोगेऽपि 'हृदि ह्येष आत्मे'तिश्रुत्या हृदयस्थस्य जीवस्य बाह्याकाशादिस्थानत्वे मानाभावाच्च । जीवेऽमृतत्वस्यासंभावाच्च । दिवि दिव इति वाक्ययोरैकार्थ्यस्य समतन्त्रेन दिव इति वाक्योक्तस्य ज्योतिषोऽपि जीवत्वापत्त्या ब्रह्मत्वसिद्धान्तहानेश्च । 'त्रिपादूर्ध्व उदैत्पुरुष' इत्यादिश्रुतौ—

'सुदर्शनाख्यं स्वास्त्रं तु प्रयुक्तं दयितं त्रिपा'

दिति भागवते भगवत्येव त्रिपाच्छब्दप्रयोगाच्च ॥

यच्चोक्तं परैर्विश्वतः पृष्ठेष्वित्यत्र विश्वशब्दोऽसंकुचितवृत्तिरिति दर्शयितुं सर्वतः पृष्ठेष्वित्युक्तमिति । तत्र व्यक्तमेकस्य वैयर्थ्यम् ॥

केचित्तु 'तथाऽक्षरात्संभवतीह विश्वमिति' श्रुतौ विश्वशब्दः कार्ये प्रयुक्त इत्यत्रापि तत्परः । सर्वशब्दस्तु परिशेषात्कारणपर इत्याहुः । तदपि न । 'स इदं सर्वमसृजते'त्यादौ सर्वशब्दः कार्ये प्रयुक्त इति तत्परः । परिशेषा

द्विश्वशब्दः कारणपर इति प्रसङ्गात् । 'सम्भवतीह विश्व'मित्यत्र च संभवतिपद सन्निधानेनैव विश्वशब्दः कार्यपरो न तु स्वतः । अन्यथा 'विश्वतः परमा नित्यं विश्वात्मानं परायणं' इत्यादावपि कार्यमात्रपरः स्यात् । तस्मात् श्रुति सूत्रयोरन्योक्तार्थस्यायुक्तत्वाद्भाष्योक्त एवार्थ इति ॥

टीकाक्षरार्थस्तु – आदिपदेन वाचो ग्रहणमिति । वाग्वै गायत्रीति श्रुतौ वाक्शब्दार्थगुणवत्त्वयोपासनार्थं विष्णुर्वागित्युक्तः । तथा च वाक्त्वमपि न विष्णुत्वबाधकमिति दर्शयितुं भाष्य आदिपदमित्यर्थः ॥ अनुसन्धेयत्वं च सूचयतीति । आदिपदमित्यनुषङ्गः ॥ आदिपदेन या वै सा गायत्रीति । या वै सेत्यादिना गायत्र्याः पृथिव्यभेदमुक्त्वा 'अस्यां हीदं सर्वं प्रतिष्ठित' मिति पृथिव्याःसर्वाधारत्वमुक्तम् । तच्च विष्णोरेव गायत्रीपृथिव्यादिशब्दार्थत्वे युक्तं नान्यथेत्यर्थः ॥

॥ इति गायत्र्यधिकरणम् ॥

[ अन्तिमप्राणाधिकरणम् ]

## 12 – ॐ प्राणस्तथाऽनुगमात् ॐ ॥ १-१-१२ ॥

अत्र श्रुतिलिङ्गबाहुल्येन गायत्र्यधिकरणसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेर नन्तरसंगतिः ॥

अत्र प्राणः किं मुख्यवाय्वादिः किं वा विष्णुरिति चिंता । तदर्थं किं वाय्वादिश्रुत्याद्यनुसारेण विष्णुश्रुत्यादि नेयमुत विपरीतमिति । तदर्थं किं वाय्वा दिश्रुत्यादिकं निरवकाशं विष्णुश्रुत्यादिकं तु सावकाशमुत विपरीमिति ॥

ननु 'अत एव प्राण' इत्यनेन गतार्थमिदम् । न च पूर्वत्र प्राणशब्दो वायुपरो नेत्युक्तम् । इह त्विन्द्रजीवपरो नेत्युच्यत इति भेदः । इह सूत्रे मुख्यप्राणपदाप्रयोगात् । न च पूर्वत्र वायुपरत्वस्यैव निरासः । इह त्विन्द्र जीववायुपरत्वानामिति भेदः । अस्य बहुविषयस्य तेनागतार्थत्वेऽप्यनेन तस्य

रूपविषयस्य गतार्थत्वात् । निरामकन्यायभेदं विना निरसनीयभेदमात्रेणा धिकरणभेदासिद्धेश्च । न च पूर्वत्र प्ररिच्छ्यवलंबेन श्रुत्या पूर्वपक्षे लिंगैः सिद्धान्तः । अत्र तु लिङ्गैः पूर्वपक्षे श्रुतिलिङ्गाभ्यां सिद्धान्तः ॥ अत एव तत्र पूर्वपक्षे भाष्ये प्रसिद्धेरित्युक्तम । अत्र तु सूत्रे लिङ्गादित्युक्तमिति वाच्यम । श्रुत्या प्राप्तस्य पूर्वपक्षस्य लिङ्गमात्रेण बाधितस्य पुनर्विरोधिश्रुतिलिङ्गबाधेन लिङ्गैरुज्जीवनासंभवात् । न च श्रुतिबाहुल्यादुज्जीवनम् । तद्बाहुल्यप्राप्तस्यापि पूर्वपक्षस्य (धि) गायत्र्यधिकरणं निरासात । न च तत्र गायत्रीवाक्पृथिव्यादि श्रुतयो भिन्नविषयाः । अत्र तु चक्षुः श्रोत्रं मनो वाक्प्राणः । 'तत्प्राणे प्रपन्न उत्तिष्ठन् स एष प्राण' इत्यादावेकैव प्राणश्रुतिरावृत्तेति वाच्यम् । तत्रापि 'गायत्री वा इदं सर्वं वाग्वै गायत्री सैषा षड्विधा गायत्री'तिश्रवणात । आकाशाधिकरणविषयवाक्य आकाशश्रुतेरेवावृत्तेश्च । न च श्रुतिलिङ्गबाहुल्यादुज्जीवनम् । अत एवानुव्याख्याने'बाहुल्यात श्रुतिलिङ्गयो'रित्युक्तम । इह भाष्ये टीकायां च लिङ्गमात्रोक्तिः पूर्वपक्षोपक्रममात्रमिति वाच्यम । इंद्रे 'इन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच प्राणो वा अहमस्मी'त्यादिश्रुतीनां महाव्रतयाजित्वादिलिङ्गानां मुख्यप्राणे प्राणादिश्रुतीनां 'ता अहिंसते'ति प्राण संवादादिलिङ्गनाम् जीवे 'पुरुषरूपेण य एष तपति स एष पुरुषः समुद्र' इत्यादिश्रुतीनां 'तावति शतसंवत्सरस्याह्नां सहस्राणि भवन्ती'ति शतसंवत्सरत्वादिलिंगाना च बाहुल्येऽपि इंद्रादिश्रुतेरन्तरित्यत्र प्राणश्रुतेश्चात एव प्राण इत्यत्र पुरुषश्रुतेश्च गायत्र्यधिकरणे सावकाशितत्वेन लिंगानां च विष्णौ प्रवृत्तप्रबलश्रुत्यनुसारेणान्तरधिकरणपूर्वपक्षोक्तानामर्थनेतृत्वादिलिंगानामिव विष्णौ प्रवर्तनीयत्वेन संभावितावकाशतया बहुविष्णुश्रुतिबाधकत्वायोगात ॥

दृष्टं हि 'दर्शपूर्णमासाभ्यां यजेते'त्यादौ यजेः प्रवृत्तदर्शपूर्णमासनामानुसारेण षड्यागमात्रपरत्वम् । अन्यथा राजसूययजेरिव सन्निहितसर्वयागपरता स्यात । संति च विष्णौ प्रवृत्ताः 'ब्रह्मेमं पुरुष'मिति ब्रह्मशब्दाद्याः श्रुतयः । न चेन्द्रश्रुत्यादिकं पश्यन्पूर्वपक्षी तत्सन्निहितं विष्णुश्रुत्यादिकं न पश्यतीति युक्तम् । उक्तं चानन्दमयाधिकरणे ब्रह्मशब्दस्य विष्णौ मुख्यत्वमिति चेत्

नैवम् । इन्द्रादिलिङ्गादीनां विष्णौ प्रवर्तयितुमप्यशक्यत्वेन पूर्वपक्षोदयात् । तथा हि । 'इन्द्रो वै वृत्रं हत्वा महानभवत् । यन्महानभवत्तन्महाव्रतम भव'दित्यादौ यो वृत्रहन्तेन्द्रो महाव्रतयजमानः प्रकृतः । स एव 'तमिन्द्र उवाच प्राणो वा अह'मिति तत्रापीन्द्रशब्देनोच्यते । न च वृत्रहन्तृत्व महाव्रतयजमानत्वादिकं ब्रह्मणि युक्तम् । नापि 'प्राणो वा अह'मिति प्रसिद्धेन्द्रे प्रयुक्तोऽहंशब्दो विष्णौ युक्तः। न चाहमित्यस्य मयीत्यर्थः । विभक्तिव्यत्यय प्रसङ्गात् । अन्तर्यामिपरत्वे च लक्षणा स्यात् । न चाहंशब्दः स्वत्रयोक्तत र्यामिण्येव मुख्यः । 'तदात्मानमेवावेदहं ब्रह्मास्मि' । 'अहं कृत्स्नस्य जगतः' इत्यादावीश्वरप्रयुक्ताहंशब्दस्यामुख्यार्थत्वप्रसगात् । यथा च 'वत्स मालभेते'त्यत्रालंभनं गुणकर्मभूतगोदोहनादिसाहचर्याद्गुणकर्म । तथा प्राणोऽप्य प्रधानचक्षुरादिसाहचर्यादप्रधानभूतः । न तु प्रधानभूत ब्रह्म । चक्षुरादिभि श्चातिनिकृष्टैः सर्वोत्कृष्टस्य ब्रह्मणः कलहोऽप्ययुक्तः । शतसंवत्सरत्वं तु जीवादन्यत्र न युक्तमेव ॥

यद्यपि 'तावन्ति शतसंवत्सरस्याह्ना सहस्राणि भवन्ती'त्यत्र शतसंवत्स रत्वं प्राणनिष्ठं न भाति । बृहतीसहस्रवर्णानां शतसंवत्सरस्याह्ना च षट्त्रिंशत्सह स्रत्वेन संख्यासाम्यस्यैवोक्तेः । तथापि 'तं शतं वर्षाण्यभ्यार्च'दित्यत्र 'प्राणो वा व तदभ्यार्च'दिति प्रकृतस्य प्राणस्यान्वयात्तावन्तीत्यत्रापि तस्यैवान्वयः । अत एव टीकायां 'प्राणो वा व तदभ्यार्च'दित्यादिपूर्ववाक्यं पठितम् । न च तदन्तर्यामिणि लिंगानां सावकाशता । दुःखित्वादेरपि प्रसंगात् । अपा नेतृत्वादिलिंगानामप्यन्तर्यामिगतताऽत्रत्यसिद्धान्ताधीना । न च स्वातन्त्र्यादेवे श्वरे प्राणशब्दः । सति विरोधिश्रुत्यादौ तदयोगात् । न हि दरिद्रो भृत्यो जयीत्यत्र राज्ञि जयिशब्दः । तदेतदभिप्रेत्योक्तं टीकायां 'न चैतल्लिंगं विष्णा ववकाशं लभत' इति । अन्विष्याप्यवकाशं न लभत इत्यर्थः । अन्यथा न चैतल्लिंगं सावकाशमित्येवावक्ष्यत् । विष्णुश्रुत्यादिकं त्विन्द्रादौ गौणम् ॥

नन्वथापि 'प्राचीनोऽप्यन्य' इतिप्रयोजनोक्तिरयुक्ता । आकाशाधि करणे पूर्वपक्षबीजभूताया भूते प्रसिद्धेर्वाक्यद्वयेऽपि तुल्यतया 'आकाश' इति

वाक्ये भूतपरत्वे 'यदेष' इतिवाक्येऽपि तत्परत्वमिति प्रयोजनसंभवेऽपि अत्र प्राचीनपूर्वपक्षादत्रत्यपूर्वपक्षे प्राणस्याविष्णुत्वे यो विशेषहेतुस्तदभावादेव प्राचीन प्राणस्य तत्रत्यसिद्धान्तन्यायेन विष्णुत्वोपपत्तेरिति चेन्मैवम् । यथा प्राभाकर मते कामिनियोज्यान्वयबलाल्लिङादेः स्थायिकार्यार्थत्वे निश्चिते तदन्वयशून्येऽपि नित्याधिकारे तदर्थता । यथा वा मतान्तरे वाक्यशेषेण क्वचिद्यवादिशब्दाना दीर्घशूकाद्यर्थत्वे निश्चितेऽन्यत्रापि तदर्थता । तथात्रेन्द्रादिलिंगात्प्राणशब्द स्येन्द्राद्यर्थत्वे निर्णीते 'तद्वै त्वं प्राण' इत्यत्रापि तदर्थत्वात् ॥

न चात्रामुख्यवृत्त्येन्द्रादिपरत्वेऽपि तल्लिंगोपपत्तिः । तद्वै त्वं प्राण इत्यत्र तु मुख्यवृत्त्या विष्णुपरतास्त्विति वाच्यम् । अत्रेन्द्रादौ मुख्यत्वे बाधका भावात् । न च विष्णौ मुख्यत्वमेव बाधकम् । तस्याद्याप्यसिद्धेः । इंद्रादौ योगसंभवात् । मुख्यप्राणे रूढेरपि सत्त्वाच्च । पूर्वपक्षे सर्वत्रापि वैदि कप्रयोगे प्राणशब्दस्येन्द्रादिपरत्वेन विष्णौ विद्वद्रूढेस्तद्व्याप्यमहायोगस्य चाभा वाच्च । न चात्र मुख्यवृत्त्येन्द्रादिपरत्वेऽपि पूर्वत्रामुख्यवृत्त्या विष्णुपरता सिद्धा न्तिनेष्यते । न चेन्द्रादौ विष्णौ च मुख्यता । सत्यां गतावनेकार्थत्वस्या न्याय्यत्वात् । न च वाक्यद्वयस्थप्राणशब्दस्य मुख्यवृत्त्यैकार्थत्वे पूर्वपक्षिणं प्रति बाधकमस्ति । येन मासाग्निहोत्रेऽग्निहोत्रशब्दस्येव तत्र विष्णौ प्राण शब्दस्य गौणता स्यात् । अत एवानुव्याख्याने पूर्वपक्षे 'अन्यस्य मुख्य वाच्यत्वं' इत्युक्तम ॥

न च तत्र श्रीपतित्वादिलिंगात्प्राणशब्दस्य विष्णवर्थत्वे निश्चितेऽत्रापि तदर्थतेति विपरीतं किं न स्यादिति शंक्यं, प्राणसंवादोत्क्रमणप्रवेशादीनां बहुत्वात् श्रुत्यनुगृहीतत्वात्साक्षात्प्राणविशेषणत्वश्रवणाच्च । श्रीपतित्वादिलिंगानां तु वैपरीत्यात् । पूर्वस्याविष्णुत्वशङ्कामात्रेण विष्णुत्वनिश्चयाक्षेपसंभवात् । अत एव टीकाया शङ्कापदप्रयोगः । अन्यथा प्राचीनप्राणोऽप्यन्य एव स्यात् । एकप्रकरणत्वादित्युत्तराधिकरणप्रयोजनटीकायामिवात्राप्यन्य एव स्यादित्यवक्ष्यत् । एकस्य निर्णयस्यानेकन्यायसाध्यत्वेऽपि निर्णयविरोधितत्त त्पूर्वपक्षन्यायाभासनिरासकन्यायसाध्यावातन्तरनिर्णयभेदादधिकरणभेदश्च युक्तः ।

यथा प्राभाकरमते चोदनाप्रामाण्यनिर्णयस्याध्यायमात्रसाध्यत्वेऽप्यवान्तरनिर्णय भेदादधिकरणभेदः। यथा वा मतान्तरे 'ऊर्ज पशूनाप्नोति न स पापं श्लोकं शृणोती'त्यादेरर्थवादत्वनिर्णयस्यौदुंबराधिकरणपर्णमय्यधिकरणसाध्यत्वेऽप्यवान्त रनिर्णयभेदादधिकरणभेदस्तद्वत्। तस्मात्प्रयोजनोक्तिर्युक्ता। एवमन्यत्रापि पूर्वोक्ताक्षेपेण प्रयोजनोक्तिरुपपाद्या॥

एवं च 'अत एव प्राण' इत्यत्र तैत्तिरीयस्थप्राणशब्दसमन्वय उक्तेऽपि अत्र पूर्वपक्षे ऐतरेयवाक्यस्थप्राणस्याविष्णुत्वेन तैत्तिरीयस्थस्यापि विष्णुत्वाक्षेपा दुभयत्र प्रसिद्धत्वाभावः प्राणशब्दस्य। 'आकाशोऽर्थान्तरत्वादिव्यपदेशा' दित्यत्र तु 'आकाशस्तल्लिङ्गा'दित्यत्रोक्तस्य 'आकाश इति होवाचे'ति वाक्यस्थाकाशशब्दो ब्रह्मपर इत्यस्यानाक्षेपादुभयत्र प्रसिद्धित्वम्। अत एव तत्र टीकायां पादान्तरस्थं 'तल्लिंगा'दित्यधिकरणमनाक्षिप्यैकपादस्थं द्युभ्वाद्य-धिकरणमेवाक्षिप्तम्॥

नन्वेवं सति 'ज्योतिदर्शना'दित्यत्र टीकायां तच्च ज्योतिर्यदि विष्णोर न्यत्तदा ज्योतिश्चरणाभिधानादिति पूर्वोक्तमप्यन्यत्स्यादित्युक्तत्वादग्निमूक्तेऽपि ज्योतिश्शब्दस्य पूर्वपक्षे विष्णुपरत्वाभावादुभयत्र प्रसिद्धत्वाभावात्तस्य तृतीय पादसंगतिर्न स्यादिति चेन्नैवम्। न हि ज्योतिर्दर्शनादित्यत्र ज्योतिर्वह्निरिति पूर्वः पक्षः। येन वह्नौ प्रसिद्धेः स्वतस्सिद्धत्वेनान्यत्र प्रसिद्धता। उभयत्र प्रसिद्धता तु क्वचिद्विष्णुपरत्वेन साध्या स्यात्। किंतु जीव इति पूर्वः पक्षः। न च जीवे स्वतः प्रसिद्धिरस्ति। ज्ञानात्मकत्वात्तु जीवे प्रवृत्तिः। तच्च जीवव दीश्वरेऽप्यस्तीत्युभयत्र प्रसिद्धता ज्योतिर्दर्शनादित्यत्र। 'ज्योतिश्चरणे'त्यत्र तु वह्निरिति पूर्वपक्षितत्वादन्यत्र प्रसिद्धता। 'कारणत्वेने'त्यत्र 'ज्योतिरुपक्रमा' दित्यत्र च पूर्वपक्षे पूर्वोक्ताया आकाशज्योतिश्शब्दयोर्विष्णुपरताया अनाक्षेपे ऽपि तत्र प्रागनुक्तसमन्वयस्यावान्तरकारणत्वरूपस्य लिङ्गस्यौषध्यादिनाम्नो ज्योति ष्टोमवसतादिशब्दस्य च समन्वयोक्तेर्न तयोरुभयत्र प्रसिद्धपादान्तर्भावप्रसङ्गः॥

यद्वा प्राणादिशब्दानां प्राक्समन्वयोक्तावपि लोकसिद्ध्यान्यत्र प्रसिद्ध्या न्यत्रप्रसिद्धता। आकाशोऽर्थांतरेत्यत्र त्वाकाशशब्दस्य न पूर्वं समन्वयोक्त्योभयत्र

प्रसिद्धता । किंतु वै नामेति निपातद्योतितप्रसिद्धिव्यावर्त्यत्वेन पूर्वपक्षिण्णाप्य प्रसिद्धस्य ब्रह्मरूपस्याकाशशब्दवाच्यस्याङ्गीकृतत्वेनेति ज्ञेयम् । तस्मात्पाद सङ्गतिः पूर्वपक्षोदयश्च ॥

**सिद्धान्तस्तु** – 'तं देवाः प्राणयन्ते'ति देवोपदेश्यत्वं 'तं भूतिरिनि देवा उपासाञ्चक्रिर'इति भूतत्वेन देवोपास्यत्वं 'सर्वे वेदा'इति सर्ववेदप्रतिपाद्यत्वं 'प्राणो ह्येष य एष तपती'ति सूर्यमंडलस्थत्वं 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति सर्वांतर्यामित्वं 'सर्वाणि भूतान्यापिपीलीकाभ्यः प्राणेन बृहत्याविष्टब्धानी'ति सर्वव्यापित्वमित्यादीनि प्राणे श्रूयन्ते । तानि च 'विष्णुमेवानयन्देवा' इत्यादिभाष्योक्तस्मृत्या 'सर्वे वेदा यत्पदमामनन्ति, य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते तस्य यथा कप्यासं पुंडरीकमेवमक्षिणी । पुरुष एवेदं सर्वम् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इत्यादिश्रुतिभिः वेदैश्च सर्वैरहमेव वेद्यः ध्येयस्सदा सवितृमण्डलमध्यवर्ती । तपाम्यहमहं वर्षम् । विष्टभ्याह मिदं कृत्स्न' मित्यादिस्मृतिभिश्च विष्णावेव ॥

परकीयश्रुत्यादिकं तु सावकाशम् । तथा हि इन्द्रस्य प्रसिद्धेन्द्रत्वेऽपि तत्प्रयुक्तोऽहंशब्दस्तावत् 'अहं मनु'रिति वामदेवप्रयुक्ताहंशब्दवत् श्रुतितुल्यया निरूढया लक्षणया —

> 'सर्मान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
> एषोऽहन्त्वमसौ चेति न तु सर्वस्वरूपत '

इत्यादिस्मृतिभिर्मुख्यवृत्त्या बाऽन्तर्यामिपरः । न च तत्रापि विवादः । विशिष्टस्य वामदेवस्य मन्वादित्वाभावात् । अहं मन्वादिशब्दैश्चैतन्यमात्र लक्षणा चेत्प्राण इन्द्र इति पूर्वपक्षे इन्द्रशब्देन विशिष्टोक्तौ विशिष्टेन्द्राभिन्नस्य प्राणस्य 'प्राणस्त्वं प्राणः सर्वाणी'ति सार्वात्म्योक्तिरयुक्ता स्यात् । इन्द्रशब्देन शुद्धोक्तौ तु प्राणस्य शुद्धब्रह्मत्वेन प्राणो न ब्रह्मेति पूर्वपक्षायोगः । 'प्राणो ह्येष य एष तपती'ति पूर्ववाक्यायोगश्च । न हि चिन्मात्रं तापकम् ॥

'यद्यपि अः इति ब्रह्म तत्रागतमहमिति तस्योपनिषदहमिति । ततो ऽहंनामाभव'दित्यादि श्रुतेः । 'न वा अहमिमं विजानातीति । अहं तत्तेजो

रश्मीन्नारायणं पुरुषं जातमग्रतः' इत्यादिश्रौतप्रयोगात् 'अहेयत्वादहं नामे' त्यादिस्मृतेश्चाहंशब्दोऽहेयत्वाद्यर्थोऽप्यस्ति । न वा इत्यादि श्रुतावहंशब्दस्या सच्छब्दत्वे विजानामीति स्यात् । 'भूरिति शिर' इत्यादिनाऽक्षिस्थो भगवान् हि तत्राहंशब्दः । तथापीह प्राणे 'प्राणो वा अहमस्मी'त्युत्तमपुरुषश्रवणादन्तर्यामि परतैवोक्ता । चक्षुरादिसाहचर्यं तु सति संशये निर्णायकम् । उक्तं हि 'विशये प्रायदर्शना'दिति । अत्र तूक्तलिङ्गादिना निश्चयान्न संशयः । प्राणसंवादोऽपि 'त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्म' इत्युत्कर्षपर्यवसायित्वादन्तर्यामिणि विष्णौ युक्तः । एवं च—

प्राणलिङ्गादिकं यद्यप्यवकाशोज्झितं स्वतः ।
तथाप्यन्तर्यामिगततया नेतुं हि शक्यते ॥ १ ॥

उदासी(नवदास्तां)नौ हि तावस्तां केशवश्चाब्जसंभव'

इत्यौदासीन्यं तु बाह्यरूपेण । दुःखित्वादिकं त्वतर्यामिणि बाधितम् । 'शतं वर्षाण्यभ्यार्च'दिति यच्छतसंवत्सरपर्यंतं प्राणस्य जीवशरीरेऽवस्थानं न तज्जीवलिङ्गम् । किंतु 'तस्माच्छत वर्षाणि पुरुषायुषो भवंति' इति तद्धेतुकं शतायुष्ट्वम् । तच्च न प्राणे श्रुतम । तस्मात्—

बहुत्वात् श्रुतिसाहित्यादवकाशोज्झितत्वतः ।
बलवद्भिर्विष्णुलिङ्गैः प्राणश्रुत्यादि नीयते ॥ १ ॥

तदेतदभिप्रेत्योक्तं न्यायविवरणे 'न चानन्यथासिद्धत्वमन्यत्र श्रुतिलिङ्गादेः । अन्यगतलिंगादीनामपि तद्गतभगवद्रूपापेक्षया द्युक्ते'रिति ॥

सूत्रक्रमस्तु— आद्ये स्वपक्षहेतूक्तिः । तस्य च 'तद्वै त्वं प्राण' इत्यत्र यथा प्राणो विष्णुस्तथाऽत्रापि प्राणो विष्णुः । तच्छ्रुतिलिंगानामस्मिन्प्रकरणे बहुस्थलेष्वनुगमादित्यर्थः । एवं च 'तद्वै त्वं प्राण इति श्रुताविवे'ति टीकायाः 'तथाशब्दस्समुच्चयार्थ' इति टीकया सह न विरोधः ॥

द्वितीये 'प्राणो वा अह'मितीन्द्रप्रयुक्ताहंशब्दरूपबाधकोद्धारः । तत्रा ध्यात्मसंबंधभूमशब्दस्य यदा 'प्राणस्त्व'मित्यादिभाष्यानुसारेणाध्यात्मशब्दस्य देहार्थत्वस्वीकारेण भगवद्देहभूतेन्द्रविश्वामित्रादिबह्वात्मसंबंधोऽर्थः । अस्मि

त्रिविष्टपस्य चेतत्प्रकरण इत्यर्थः । तदेन्द्रे भगवतस्सत्त्वात्तदभिप्रायेण 'प्राणो वा अह'मित्युक्तिः । अन्यथा तस्मिन्नेव प्रकरणे 'प्राणस्त्वं प्राणः सर्वाणि भूतानी'ति न स्यात् । पूर्वपक्षेऽपि विश्वामित्रादेः प्राणत्वाभावादिति परिहारार्थः । अत एव सूत्रे भूमपदम् । भाष्येऽपि प्राणस्त्वमित्युपादानम् । यदा तु 'अध्यात्मसंबन्धशब्देनावेशो विष्णुरिन्द्रे विवक्षितः । अधिकात्मनः परमात्मनः संबन्धोऽध्यात्मसंबन्ध' इत्यैतरेयभाष्यानुसारेण भगवतः सन्निधानविशेषोऽध्यात्मसंबन्धभूमशब्दार्थ । अस्मिन्नित्यस्य चेन्द्र इत्यर्थः । तदेन्द्रे तात्कालिकभगवत्सन्निधानविशेषाभिप्रायेण 'प्राणो वा अह'मित्युक्तिरित्यर्थः । एवैतरेयभाष्योदाहृतात् —

'आविष्टो विष्णुनाथेन्द्रः प्राणेन सह कौशिक'

नित्यादिब्रह्मांडवाक्यादवगन्तव्यम् ॥

तृतीये तु तर्हि सर्वाति स्यादितीदं बाधकोद्धारे यद्बाधकं तदुद्धारः । तत्र च शास्त्रपदं ब्रह्मणः सर्वशास्तृत्वात्तच्छब्दवाच्यता युक्तेति दर्शयितुम् । अत एव भाष्ये —

'तच्छास्त्रान्नोच्यते विष्णुः सर्वशास्तृत्वहेतुत'

इति स्मृतिरुदाहृता ॥

चतुर्थे जीवादि लिङ्गं तदन्तर्यामिनिष्ठमित्यस्यार्थस्य तृतीयेनेन्द्रप्रयुक्ताहंशब्दस्यान्तर्यामिविषयत्वं वदतोक्तप्रायत्वात् तदनुक्त्वान्तर्यामिकथनं कस्मादिति शङ्कायामन्तरादिभेदेनोपासात्रैविध्यादित्येवोक्तम् ॥

अन्ये तु प्रतर्दनं प्रतीन्द्रेण प्रयुक्तं 'प्राणोऽस्मि प्रज्ञात्मे'ति वाक्यमुदाहृत्य 'मामेव विजानीही'तीन्द्रलिङ्गात् 'इदं शरीरं परिगृह्योत्थापयती'ति वायुलिङ्गात् 'वक्तारं विद्या'दिति जीवलिङ्गाच्चेन्द्रादिरेव प्राण इति प्राप्ते 'यं त्वं मनुष्याय हिततम'मिति हिततमत्वादिब्रह्मलिंगाद्ब्रह्मैव प्राण इति सिद्धान्त इत्याहुः । तत्र न तावत्परमपुरुषार्थसाधनत्वं हिततमत्वम् । त्वन्मते ज्ञानादेवाज्ञाननिवृत्त्या ब्रह्मणि तस्याभावात् । परमपुरुषार्थत्वं हिततमत्वं चेत् सर्वोपप्लवरहितं मोक्षदशानुगतं शुद्धचैतन्यं हिततमं वाच्यम् । तस्य हिततमत्वं च न विशिष्टं

प्रति । तस्य मोक्षदशायामभावात् । नापि शुद्धं प्रति । तस्याखण्डत्वेना स्येदं हितमिति विभागायोगात् । किं च हितत्वं विना न हिततमत्वम् । न चाखण्डे हितत्वसामान्यं हिततमत्वविशेषश्च युक्तः । तस्मान्न हिततमत्वं ब्रह्मलिंगम् । नापि 'तं मामायुरमृतमित्युपास्वे'त्युक्तममृतत्वोपासनकर्मत्वं च ब्रह्मलिंगम् । अविद्यमानतदुपासनकर्मत्वस्येन्द्रादावपि सम्भवात् । नापि 'स यो मां वेद न स्तेयेन न भ्रूणहत्यये'त्युक्तः स्वज्ञानेन सर्वकर्मालेपो ब्रह्मलिंगम् । शुद्धे 'एष ह्येव साधु कर्म कारयति एष लोकाधिपति'रित्या देरयोगात् । विशिष्टज्ञानेन च त्वन्मते सर्वकर्मलेपाभावात् । एवं लिंगा न्तरं दूष्यम् । इदं चाधिकरणं जीवत्वनिषेधेन ब्रह्मत्वविधानात्तदभेदप्रतिकूलम् ॥

**केचित्तु** 'मामुपास्स्वे'तीन्द्रलिंगात् जीवलिंगाना च जीव-विशेषेन्द्रे पर्यवसानात् प्राणलिङ्गे सत्यपि 'प्राणोऽस्मी'ति प्राणस्य जीवविशेषेन्द्रे विशेषणत्वप्रतीतेर्जीववायुपक्षयोरनुत्थानादिन्द्रः प्राण इति प्राप्ते 'आनन्दोऽजरोऽमृत' इत्यादिब्रह्मलिंगाद्ब्रह्मैव प्राण इति सिद्धान्त इत्याहुः । **तन्न** । इन्द्र इत्येव पूर्वपक्षे सति सूत्रे 'जीवमुख्यप्राणलिङ्गा'दिति शङ्कायोगात् । तत्र जीव शब्दस्य तद्विशेषेन्द्रपरत्वे वक्तुरात्मोपदेशस्यापीन्द्रलिङ्गस्यानेनैव सग्रहसंभवात् 'न वक्तुरात्मोपदेशा'दिति पृथक्सौत्रशङ्कायोगात् । अस्मदीयोदाहरणे तु जीव लिंगं शतायुष्ट्वं नेन्द्रे युक्तम् । मनोवाक्प्राण इत्यादौ प्राणोऽपि नान्यविशेषणम् ॥

यत्तु परकीयं 'न वक्तु'रितिसूत्रव्याख्यानं वक्तुरुपदेष्टरीन्द्रस्य प्राणोऽस्मीत्यात्मोपदेशादिति चेन्न । अस्मिन्प्रकरणे 'यावद्ध्यस्मिन् शरीरे प्राणो-वसति तावदायु'रित्यायुरवधित्वस्य 'वक्तारं विद्या'दिति वक्तृत्वप्रज्ञात्मत्वादे-श्चोक्तेः प्रत्यगात्मसंबन्धबाहुल्यमस्ति । तच्च पराचीनेन्द्रे न युक्तमिति । **तन्न** । उपदेशादित्यनेनैवोपदेष्टृत्वरूपवक्तृलाभे न वक्तुरित्यस्य वैयर्थ्यात् । स्वात्मोपदे शादित्यस्य तु वक्तृपदप्रयोगेऽप्यलाभात् । अस्मत्पक्षे च बृहतीसहस्रवक्तारं प्रतीन्द्रस्य विप्रलम्भो न युक्त इति सूचनाय तस्य सार्थक्यात् । इन्द्रेऽपि

स्वशरीरावस्थानवक्तृत्वप्रज्ञात्मन्वादेः सभवादायुरवधित्ववक्तृत्वयोश्च वायुजीवयोरेव संभवेन सदा सर्वगत इन्द्रियादिरहिते च ब्रह्मण्यसंभवेन च ब्रह्मपक्षप्रतिकूलत्वात्। किं चास्माकं मत इव वक्तुरात्मोपदेशस्य गतिमनुक्त्वा प्रकरणस्य ब्रह्मपरत्वोक्तिरयुक्ता। उक्तं चानुगमादित्यनेन प्रकरणस्य ब्रह्मपरत्वम् ॥

केचित्तु परमात्मासाधारणधर्मोऽध्यात्मशब्दार्थः। तत्संबन्धबहुत्वमध्यात्मसंबन्धभूमेत्याहुः। तन्न। उक्तदोषत्वात्। संबन्धपदवैयर्थ्याच्च। अन्यथा 'अन्तस्तद्धर्मे'त्यादावपि संबन्धपदप्रसङ्गात्। अस्मिन्निति सप्तम्यैव संबन्धोक्तेश्च। किं चेह भूमपदप्रयोगाद्धिततमत्वादिवदानन्दाजरत्वादीनां सर्वेषां ब्रह्मधर्माणामत्रैव विवक्षासंभवेनानुगमादिति व्यर्थम् ॥

यच्च शास्त्रदृष्ट्येत्यस्य परकीयं व्याख्यानं इन्द्र स्वात्मानं यथा शास्त्रमार्गेण ज्ञानेनाहं ब्रह्मेति पश्यन्मामेव जानीहीत्युपदिदेश वामदेववदिति। तन्न। चिदचित्संवलनात्मकाहं शब्दार्थे ब्रह्मत्वस्य मन्वादित्वस्य वाऽभावेन 'मामेव जानीहि अहं मनु'रित्यादिव्यपदेशहेतोरहं ब्रह्मेत्यादिदृष्टेर्भ्रान्तिदृष्टित्वेन शास्त्रदृष्टित्वाभावात्। चिन्मात्रैक्यदृष्टेश्च भिन्नविषयत्वेन मां विजानीहीत्यादिव्यपदेशहेतुत्वात्। मामित्यादौ चिन्मात्रलक्षणायां च 'मां विजानीहि यो मां वेदे'ति विचिकर्मत्वोक्तिरयुक्ता ॥

किं च शास्त्रशब्दस्य हिताहितशास्तरि वेदादौ योगसंभवान्न रूढिः। उक्तं च —

'भवेतां यदि वृक्षस्य वाजिकर्णौ कथं च न।
अदृष्टां समुदायस्य कः शक्तिं जातु कल्पये'

दिति। शास्तृत्वं च 'एकः शास्ता न द्वितीयोऽस्ति शास्ते'त्यादिश्रुत्या ब्रह्मण्येव मुख्यम्। मुख्यसंभवे चामुख्यमयुक्तम्। दर्शितश्च भाष्यकृता 'संविच्छास्त्रं परं पद'मिति ब्रह्मणि शास्त्रपदप्रयोगः। लोकप्रसिद्धिस्तु शास्त्रशब्दस्य वेदादन्यत्रैव। अपि च सकारणकदृष्टिद्वारा व्यपदेशविपर्ययोक्तितो

ऽप्यसद्रीत्या साक्षादेव तदुक्तिर्युक्ता । सौत्रो वामदेवदृष्टान्तोऽपि परपक्षे न युक्तः । 'अहं मनु'रित्यादिनोक्तं ह्यैक्यं चिन्मात्रविवक्षया वक्तव्यम । न च तद्विवक्षायां 'अहं भूमिमददामार्यायाहं दृष्टिं दाशुषे मर्त्याये'त्यादिविशिष्ट विषयमुत्तरवाक्यं युज्यते । भगवद्धर्मो हीन्द्राय भूमिप्रदानादिकम् ॥

केचित्तु 'यस्यात्मा शरीर'मित्यादिशास्त्रेण या दृष्टिः जीवो ब्रह्मशरीरं शरीरवाची च शब्दो देवमनुष्यादिशब्दवच्छरीरिपर्यन्त इत्येवरूपा सा शास्त्रदृष्टि रित्याहुः । तन्न । उक्तदोषत्वात् । भगवत्यहंशब्दप्रयोगे शरीरशब्दः शरीरिपर्यन्त इति लोकदृष्टेरपि हेतुत्वेन शास्त्रपदप्रयोगे विशेषहेत्वभावाच्च ॥

यत्तु 'जीवमुख्यप्राणे'तिसूत्रस्य परकीयं व्याख्यानं तत्तल्लिंगानुग्रहार्थं किंचिदत्र जीववाक्यं किंचिन्मुख्यप्राणवाक्यं किंचिद्ब्रह्मवाक्यम । तथा च त्रयोऽप्युपास्या इति चेन्न । उपासात्रैविध्यप्रसङ्गात् । अन्यत्र 'प्राणस्य प्राण'मित्या दिवाक्यान्तरे ब्रह्मलिंगैः प्राणशब्दे ब्रह्मपरताया आश्रितत्वादिहापि हिततमत्वादि ब्रह्मलिङ्गयोगादिति । तन्न । 'अपीतौ तद्वत्प्रसङ्गात्' इत्यादिवत्प्रसङ्गपदाभावात् । 'मामेव विजानीही'तीन्द्रलिङ्गस्यापि सत्त्वेन चातुर्विध्यादिति वक्तव्य त्वाच्च । पूर्ववादिनं प्रतीष्टापत्तेश्च ॥

ननूपक्रमोपसंहारैकरूप्यादेकवाक्यतावगता । अत एव भामत्या भाष्य मुल्लंघ्य त्रिविधोपासनापरत्वेन वाक्यभेदेन पूर्वपक्षं प्रापय्य तदेकवाक्यताप्रतीते ब्रह्ममात्रपरत्वमिति सिद्धान्तितमिति चेदुच्यते ॥

बुद्ध्यादिपरमत्रैव सा प्रज्ञेत्यादिकं यथा ।
मामुपास्स्वेत्यादिवाक्यं तथास्त्विन्द्रादिगोचरम् ॥ १ ॥

अत्रैव ब्रह्मपरवाक्यसमुदाये यथा 'यो वै प्राणः सा प्रज्ञा स प्राणः सह ह्येतावस्मिन्शरीरे वसतः सहोत्क्रामत' इत्येकदेशो ज्ञानक्रियाशक्त्याश्रयबुद्धिप्राण परः सिद्धान्तेऽपि प्रज्ञाप्राणशब्दयोरुत्क्रमणादिलिङ्गैर्बुद्धिवायुपरत्वात् तथा पूर्व पक्षेऽपीन्द्रादिलिङ्गस्वारस्यार्थं तत्तद्वाक्यमिन्द्रादिपरमस्तु । आश्रितत्वादित्यत्र

च प्रकृतत्रैविध्यस्यैवान्वयसंभवे ब्रह्मपरतया इत्यध्याहारो न युक्तः। तद्योगा दिति च सर्वनाम्नः सन्निकृष्टत्रैविध्यपरत्वसंभवे विप्रकृष्टब्रह्मलिङ्गपरत्वमयुक्तम्। तद्योगादित्यस्यानुगमादित्यनेन पुनिरुक्तिश्च ॥

इतरे तु प्राणधर्मेण बुद्धिधर्मेण च ब्रह्मोपासायास्त्रैविध्याद्ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं न विरुद्धमिति व्याचक्षते। तन्न। अन्यधर्मेणान्योपासने ब्रह्मधर्मादिना जीवोपासायाः त्रैविध्याज्जीववाक्येऽपि ब्रह्मलिङ्गं न विरुद्ध मिति वैपरीत्यप्रसङ्गात् ॥

केचित्तु चिद्विशिष्टत्वेनाचिद्विशिष्टत्वेन स्वरूपेण चेत्युपासायास्त्रैविध्यम्। न च वाक्यभेदः, 'तं मामायुरमृतमित्युपास्व'त्येकस्मिन्नेव वाक्ये मामिति जीव-विशिष्टाया आयुरिति प्राणविशिष्टाया अमृतमिति स्वेन रूपेण चोपासानाय। विधानादित्याहुः। तन्न। 'तान्वरिष्ठः प्राण उवाच य एवायं मुख्यप्राणः अपहतपाप्मा ह्येष' इत्यादिश्रुत्या मुख्यप्राणस्य चेतनत्वात्तल्लिंगनिर्वाहाया चिद्विशिष्टोपासनोक्त्ययोगात् ॥

टीकाक्षरार्थस्तु। ननु 'एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वै' इति हिर ण्यदन्वदवन्महिदासोऽपि ऋषित्वेनोच्यतामित्यत आह—**न हि महिदासोऽपि मुनित(यैवो)योच्यते वैयर्थ्यादिति**। अस्या उपनिषद ऐतरेयसंज्ञयैवेतरा पुत्रस्य महिदासस्य ऋषित्वसिद्ध्या तदुक्तिनैष्फल्यादित्यर्थः। यद्वा ऋषिमात्रत्वे महिदासस्य 'इतः प्रदाना ह्येत इतः संभृता' इत्यादिना देवतापदप्रदातृत्वं तत्पो षकत्वमित्यादीनामुपास्यब्रह्मधर्माणामुक्तेर्नैष्फल्यादित्यर्थः। यद्वा महिदासस्य मुनित्वेनाप्युक्तिरिष्टा। मुनित्वेनैवोक्तिर्न तु ब्रह्मतयेति तु न युक्तम्। 'इतः प्रदाना ह्येत इतः संभृता' इत्यादीनां ब्रह्मधर्मवाचिनां विरुद्धार्थत्वादित्यर्थः ॥

अत्र चाद्या पञ्चाधिकरणी समन्वयविशेषाप्रतिपादकत्वादध्याय पादबहिर्भूता तदुपोद्घातत्वेनैका पेटिका। तत्राप्याद्यं शास्त्रमात्रोपोद्घात रूपम्। इतरा चतुरधिकरणी तु शास्त्रान्तर्गताप्यध्यायोपोद्घातरूपा। आनन्द

मयमारभ्यापादपरिसमाप्ति समन्वयपरत्वेनैका महापेटीका । तत्राप्यानन्दमयान्तरधिकरणे बहुविषयपूर्वपक्षयुक्तत्वेन । अन्तरादिचतुरधिकरणी तु साक्षादानन्दमयाक्षेपकपूर्वपक्षयुक्तत्वेन । तत्राप्याकाशादित्रयमन्तरधिकरणन्यायातिदेशकत्वेन भूते प्रसिद्धनामविषयकत्वेन चैकावान्तरपेटिकेत्याद्यूह्यम् ॥

शब्दाःसामान्याधिदैवाधिभूताध्यात्मगोचराः ।
ससूक्ता अधिवेदस्थाः सलिंगाश्चात्र चिंतिताः ॥ १ ॥

अस्मिंश्च पादे आनन्दमय इत्यत्र सामान्यशब्दाः अन्तरित्यत्राधिदैवगताः। आकाश इत्यत्राधिभूतगताः । अत एव प्राण इत्यत्राध्यात्मगताः । ज्योतिरित्यत्र सूक्तसहिताः। छन्द इत्यत्राधिवेदगताः । प्राणस्तथेत्यत्र लिंगसहिताः शब्दा विचारिता इति ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादाना शिष्येण व्यासयतिना
विरचितायां श्रीमद्भाष्यटीकाविवृतौ
**तात्पर्यचन्द्रिकायां प्रथमाध्यायस्य प्रथमःपादः**



# शुद्धाशुद्धपत्रम्

| Page | Line | For | Read |
|---|---|---|---|
| ३ | १० | शब्दे | शब्दो |
| ५ | ३ | योत् | योगात् |
| ९ | १५ | ग्रह्यम् | ग्राह्यम् |
| १० | १२ | वाय | वायु |
| ११ | १४ | उपपत्त | उपपत्ते |
| १२ | ३ | तद्विज्ञास | तद्विजिज्ञास |
| | १३ | शब्दोत्तया | शब्दोक्तया |
| १३ | २१ | नाममंत्रस्य | नामधेयानाममंत्रस्य |
| १४ | २० | पदाश्रवणात् | पदश्रवणात् |
| १५ | १९ | लक्षकत्वेन | लक्षकत्वे |
| १६ | ५ | अवच्छेदक | अवच्छेदकज्ञानावच्छेदक |
| | २२ | सूचने | सूचनं |
| १७ | ७ | अधिकाराद्य | अधिकार्याद्य |
| | २२ | भूतस्य-लाभात् | भूतस्यपूर्वप्रकृतस्य लाभात् |
| १८ | १७ | पाठन | पठन |
| | १८ | चैत्र | चैतत् |
| २५ | २ | ब्रह्मर्का | ब्रह्मतर्का |
| २८ | १८ | ब्रह्मानंदत्वे | ब्रह्मानन्यत्वे |
| ३१ | ५ | प्राल्भ्य | प्रागल्भ्य |
| ३१ | ११ | वैश्वदेवस्य | वैश्वदेवस्य वैश्वदेवावैश्वदेव |
| ३४ | ११ | जिज्ञासाधर्मि | जिज्ञासाधर्मिप्रतिबिंबे तु सामान्य |

| Page | Line | For | Read |
|---|---|---|---|
| | | | प्रतिपत्त्यादितियुक्तम् |
| ३५ | २४ | हरीवंशत्रयेति | हरिवंशत्रयेति |
| ३७ | २४ | हेतुत्वेपपत्ते: | हेतुत्वोपपत्तेः |
| ३८ | ७ | प्राप्यत्वस्य च | प्राप्तत्वस्य च |
| | १६ | | क्लिष्टकारित्वादिनोपपत्तेश्च |
| ४१ | ६ | नित्वत्व | नित्यत्व |
| | २३ | तास्म | तस्मा |
| ४२ | २२ | मुक्तिदो | भुक्तिदो |
| ४३ | ६ | अस्येवनेन | अस्येत्यनेन |
| | ७ | चेपरमते | चेत्परमते |
| | ११ | तदाश्चित | तदाश्रित |
| ४५ | १६ | प्रताश | प्रकाश |
| ४६ | १० | श्वरूपस्य | स्वरूपस्य |
| ४९ | १४ | एकेनवै | एकेनैव |
| ५२ | १० | कर्तत्यरीति | कर्तरीत्यति |
| ५८ | १० | शस्त्रातात्पर्य | शास्त्रतात्पर्य |
| ५९ | १ | चार्थवदाहीन | चार्थवादहीन |
| ६० | ११ | प्रतात | प्रतीत |
| ६१ | २१ | दध्नाजुहोती | दध्नाजुहोतीत्यादेश्चगुणविधेः स्वानुपजीविनाअग्निहोत्रं जुहोती |
| ६३ | ८ | देवा | वेदा |
| ६५ | १६ | तावद्वृट्ट | तावद्भाट्ट |
| | १७ | रीत्या | रीत्या नापि प्राभाकरेविवरणरीत्या |

| Page | Line | For | Read |
|---|---|---|---|
| ६६ | ७ | तात्पर्य | यत्र तूभयं तत्र विरोधलक्षणैक्यतद्रूप्यादुभयानुगुणे तात्पर्यम् |
| ६८ | ११ | मात्रण | मात्रेण |
| | १२ | प्रतिज्ञान | प्रातिज्ञान |
| | १४ | प्रगनिवृत्तस्य | प्रागनिवृत्तस्य |
| ६९ | ११ | प्रलिपत्ति | प्रतिपत्ति |
| | २६ | शस्त्रस्य | शास्त्रस्य |
| ७५ | ५ | करणं | कारणं |
| ७६ | ४ | चेने | चेतने |
| ७७ | १३ | ततश्च | ततश्च 'यतो वाच' |
| ७८ | ३ | औपाधिक | औपाधिक |
| ७९ | १८ | संभवान् | संभवात् |
| | २५ | प्रसिद्धाः | प्रसिद्धिः |
| ८२ | १७ | द्वितय | त्रितयं |
| ८३ | २४ | प्रातिपदिकमा | प्रातिपदिकमात्र |
| ८९ | २६ | ब्रह्मामृतं | ब्रह्मामृतोमृतं |
| १०५ | ४ | छेत्तर्हि | चेत्तर्हि |
| | १९ | ह्रशब्दतः | ह्रह्मशब्दतः |
| १०६ | १५ | तस्मादूभूत | तस्मादुद्भूत |